इच्छामि पडिक्कमिउं इरियावहीयाए विराहणाए० जाव तस्स मिच्छामि दुक्कडं ॥ ६ ॥

सामान्यतोऽतिचारान् प्रतिक्रम्य विशेषतो गमनागमनातिचारं अधिकृत्य प्राह-इच्छामि पडिक्कमिउं इरिआवहिआए इत्यादि ॥ ६ ॥

इच्छामि पडिक्कमिउं पगामसिज्जाए निगामसिज्जाए संथाराउवट्टणाए परियट्टणाए आउंटणाए पसारणाए छप्पइसंघट्टणाए कुइए कक्कराइए छीए जंभाइए आमोसे ससरक्खामोसे आउलमाउलाए, सोअणवत्तिआए इत्थीविप्परिआसिआए, दिट्ठीविप्परिआसिआए मणविप्परिआसिआए, पाणभोअणविप्परिआसिआए जो मे देवसिओ अइआरो कओ तस्स मिच्छामि दुक्कडं ॥ ७ ॥

गमनागमनातिचारान् प्रतिक्रम्य शयनस्थानातिचारप्रतिक्रमणमाह-इच्छामि प्रतिक्रमितुं, कस्येत्याह-प्रकामशय्यया हेतुभूतया यो मया दैवसिकोऽतिचारः कृतः तस्येति योग, एव सर्वत्र, प्रकामं चतुर्याम शय्या शयनं प्रकामशय्या, अथवा शय्यासंसूचकः संस्तारकः उत्तरपट्टातिरिक्ता, प्रावरणमाश्रित्य कल्पत्रयातिरिक्ता वा प्रकामशय्या, स्वाध्यायाद्यकरणतश्चातिचारः, प्रतिदिनं प्रकामशय्यैव निकामशय्या, उद्वर्त्तनं वामपार्श्वाद्दक्षिणापार्श्वेन तया, स्त्रीत्वं सर्वत्र प्राकृतत्वात्, एवं दक्षिणपार्श्वाद्वामपार्श्वेन परिवर्त्तनं, आकुंचना अंगसंकोचनक्रिया, प्रसारणांगविस्तारणा, अप्रमृज्य कुर्वतोऽतिचारः, षट्पदीसंघट्टनं अविधिना संस्पृशनं, कूजितं कासितं, तत्र उद्घाटमुखेऽतिचारः, विषमा धर्मवतीत्यादिशय्यादोषोक्तिरूपे कर्करायिते अश्रार्त्तध्यानजोऽतिचारः, जृंभे जृंभिते अविधिकरणेऽतिचारः, अथाप्रमृज्य करणे स्पर्शनमामर्षः, सचित्तरजत्थास्कामर्षः, आकुलाकुलया स्त्र्यादिपरिभोगविवाहयुद्धादिसंस्पर्शननानाप्रकारया, स्वप्नप्रत्ययया स्वप्ननिमित्तया विराधनया योऽतिचार, एवमेव भेदेनाह, स्त्रीविपर्यासोऽब्रह्मसेवा

तत्र भवा स्त्रीविपर्यासिकी तया, स्त्रिय एव रागतोऽवलोकनं दृष्टिविपर्यासः, तत्र भवा दृष्टिः विपर्यासिकी तया, मनसाध्युपपत्तौ मनोविपर्यासस्तत्र भवा मनो विपर्यासिकी तया, पानभोजनयोर्विपर्यासो रात्रौ परिभोगस्तत्र भवा, यो मया दैवसिकोऽतिचारः कृतः तस्य मिथ्या मे दुःकृतं, ननु दिवाशयनस्य निषिद्धत्वादसंभव एवातिचारस्य इति, न, अपवादविषयत्वादस्य ॥ ९ ॥ एवं त्वग्वर्त्तनस्थानातिचारप्रतिक्रमणमभिधाय गोचरातिचारानाह—

**पडिक्कमामि गोअरचरिआए भिक्खायरिआए उग्घाडकवाडउग्घाडणाए साणावच्छदारासंघट्टणाए मंडीपाहुडियाए बलिपाहुडियाए ठवणापाहुडिआए संकिए सहसागारिए अणेसणाए पाणभोअणाए बीअभोअणाए हरिअभोअणाए पच्छेकम्मिआए पुरेकम्मिआए अदिट्ठहडाए दगसंसट्ठहडाए रयसंसट्ठहडाए पारिसाडणिआए पारिट्ठावणियाए ओहासणभिक्खाए जं उग्गमेणं उप्पायणेसणाए अपरिसुद्धं पडिग्गहिअं परिभूत्तं वा जं न परिट्ठविअं तस्स मिच्छामि दुक्कडं ॥ ७ ॥**

प्रतिक्रमामि 'गोचरचर्यायां योऽतिचार इतिगम्यं, गोश्चरणं गोचर, तद्वच्चर्या गोचरचर्या तस्यां भिक्षार्थं चर्या भिक्षाचर्या तस्यां, कथं तस्यां अतिचार इत्याह,—उद्घाटमदत्तार्गलं ईषत् स्थगितं वा यत्कपाट तस्य उद्घाटनं तदेवोद्घाटकपाटोद्घाटना तया, इहाऽप्रमार्जितादिनाऽतिचारः, श्ववत्सदारसंघट्टनया, साधावागते मंड्यां ढक्कनिकायां भाजनांतरे वा प्रथममुत्सार्य ओदनादिप्राभृतिका या दत्ते सा मंडीप्राभृतिका तया, प्रवृत्तिदोषान्न कल्पते सा, चतुर्दिक्षु वह्नौ वाऽर्चार्थं वा बलिं क्षिप्त्वा ततो यां प्राभृतिकां दत्ते सा बलिप्राभृतिका, भिक्षाचरार्थं या भिक्षा स्थापिता तन्मध्यात् यां, दत्ते सा स्थापनिका प्राभृतिका तया, आधाकर्मादिदोषणा, अन्यतमस्मिन् सशंकिते सति योऽतिचारः, सहसाकारेण भवं सहसाकारिक, अकल्पनीय-

ग्रहणं तत्र, अत्र तमपरित्यजतोऽतिचार, अनेन प्रकारेण याऽनेषणा तया, प्राणिनो रसजादयो भोजने संसक्तदध्यादौ व्यापाद्यन्ते यस्यां प्राभृतिकायां सा तया, एवं बीजभोजनया, हरितभोजनया, अत्र संघट्टादि दातृग्राहकेभ्यो ज्ञेयं, पश्चाद्दानानंतरं जलेन हस्तधावनादिरूपं कर्म यस्यां सा, तया, गृहांतरस्था अदृष्टा सती याहृता आनीता भिक्षा तया, एवं उदकसंसृष्टा आहृतया, हस्तमात्रगतोदकसंसृष्टाहृतया वा, एवं रजः पृथ्वीकायः, तत्संसृष्टाहृतया, परिसाटनं धान्यघृतविंछादिच्छर्दनं, तेन निर्वृत्ता पारिसाटनीकी तया, परिष्ठापनं प्रदानभाजनगताऽकल्पद्रव्यांतरोज्झनरूप तेन निर्वृत्ता तया, ओहासणं समभाषया विशिष्टद्रव्ययाचनं, तत्प्रधाना भिक्षा तया, सर्वदोषसंग्रहार्थमाह—यत्किंचित् अशनादि उद्गमेन आधाकर्मादिरूपया अनेषणया शंकितादिरूपया अपरिशुद्धं परिगृहीतं प्रतिभुक्तं, कथंचिद् गृहीतमपि यन्न परिष्ठापितं यन्नोज्झितं अपुन करणेन तस्य मिथ्या मे दुकृतं ॥ ८ ॥
एवं गोचरातिचारप्रतिक्रमणमभिधाय स्वाध्यायातिचारानाह—

**पडिक्कमामि चाउक्कालं सज्झायस्स अकरणयाए उभओकालं भंडोवगरणस्स अप्पडिलेहणाए दुप्पडिलेहणाए अप्पमज्जणाए दुप्पमज्जणाए अइक्कमे वइक्कमे अइयारे अणायारे जो मे देवसिओ अइआरो कओ तस्स मिच्छामि दुक्कडं ॥ ९ ॥**

प्रतिक्रमामि चतु कालं, दिनरात्रिआद्यांऽतिमयामेषु स्वाध्यायस्य सूत्रपौरुष्या अकरणेन, उभयकालं प्रथमपश्चिमपौरुष्योर्भांडोपकरणस्य वस्त्रपात्रादेः अप्रतिलेखनया मूलत एव चक्षुषाऽनिरीक्षणेन, दुःप्रतिलेखनया दुर्निरीक्षणया, अप्रमार्जनया रजोहरणादिना दुप्रमार्जनया तेनैव अर्धविषमविधिना, आधाकर्मादिनिमंत्रणे गृहीष्ये, एव प्रतिश्रृण्वति साधौ अतिक्रमस्तत्र तद्‌गृहणार्थं गच्छति व्यतिक्रमः तत्र गृहीते अतिचारः, तत्र भुक्तेऽनाचार, यथा कर्मणि अतिक्रमादय, तथान्यत्रापि यो मया दैवसिकोऽतिचारः कृत तस्य मिथ्या मे दुकृतं ॥ ९ ॥

अयमतिचार॰ संक्षेपत एकविध , विस्तरतस्त्वनेकविध , तत्र कियतोऽपि एकविधादिनाह—

**पडिक्कमामि एगविहे असंजमे ॥ १० ॥**

प्रतिक्रमामि एकविधेऽसंयमे, अविरतिरूपे सति यो मया निषिद्धकरणादिनाऽतिचार कृत मिथ्यादु कृतमिति सर्वत्र योज्यं ॥१०॥

**पडिक्कमामि दोहिं बंधणेहिं—रागबंधणेणं दोसबंधणेणं, पडिक्कमामि तिहिं दंडेहिं—मणदंडेणं वयदंडेणं कायदंडेणं, पडिक्कमामि तिहिं गुत्तीहिं—मणगुत्तीए वयगुत्तीए कायगुत्तीए, पडिक्कमामि तिहिं सल्लेहिं—मायासल्लेणं नीयाणसल्लेणं मिच्छादंसणसल्लेणं, पडिक्कमामि तिहिं गारवेहिं—इड्ढीगारवेणं रसगारवेणं सायागारवेणं ॥ ११ ॥**

प्रतिक्रमामि द्वाभ्यां बंधनाभ्यां, बध्यते जीवोऽष्टभिः कर्मभिर्येन हेतुना तद्बधन, रागबंधनेन द्वेषबंधनेन, त्रिभिर्दंडैः, दंड्यते चारित्रधनापहारत एभिरात्मा इति दंडः, मनोवाक्कायदुःप्रयुक्त॰, प्रतिक्रमामि तिसृभिर्गुप्तिभि अत्रापि प्रतिषिद्धकरणकृत्याकरणविपरीत-प्ररूपणादिनातिचार , प्रतिक्रमामि त्रिभि शल्यैः, पाप कृत्वा लज्जयाऽनालोचयत , अन्यथा वा निवेदयतो मायाशल्यं, दिव्यमानुषत्व-वांछयानुष्ठानं निदानशल्यं मिथ्यात्वं दर्शनशल्यं अभिनिवेशादिना, प्रतिक्रमामि त्रिभिः, गौरवं संसारभ्रमणहेतुः कर्मनिदानमित्यर्थ , तद्धिया राजपूजा आचार्यत्वादिवांछारूपया गौरवं, तद्धि प्रार्थनाद्वारेण आत्मनोऽशुभभावगौरवं, तेन, एवं रसाभिलाषद्वारेण रस-गौरवं, तेन, एवं सातगौरवमपि, सातं सुखं, अत्र त्रिष्वपि, मंगुः आचार्यो मथुरापुरीवासी उदाहरणं ॥ ११ ॥

**पडिक्कमामि तिहिं विराहणाहिं—नाणविराहणाए दंसणविराहणाए चरित्तविराहणाए, पडिक्कमामि**

चउहिं कसाएहिं—कोहकसाएणं माणकसाएणं मायाकसाएणं लोहकसाएणं, पडिक्कमामि चउहिंसण्णाहिं आहारसण्णाए भयसण्णाए मेहुणसण्णाए परिग्गहसणाए, पडिक्कामामि चउहिं विकहाहिं—इत्थिकहाए भत्तकहाए देसकहाए रायकहाए, पडिक्कमामि चउहिं झाणेहिं—अट्टेणं झाणेणं रुद्देणं झाणेणं धम्मेणं झाणेणं सुक्केणं झाणेणं ॥ १२ ॥

तिसृभिर्विराधनाभिः ज्ञानस्य विराधना प्रत्यनीकता, गुरुनिह्नवांतरायादिना खंडना, तया, सम्यकत्वे सत्यपि श्रेणीकादयो नरकं गताः, इत्यादि नरकोद्भावनं दर्शनं विराधना तया, चारित्रविराधना—व्रतादिखंडना तया, चतुर्भिः कषायैः, एते च प्रतीता, चतसृभिः संज्ञाभि आहारसंज्ञा आहाराभिलाषः अत्यासक्तिरूपः, अत्यंतभयभ्रांतचित्तता भयसंज्ञा तया, मैथुनसंज्ञा वेदोदयजा, एवं परिग्रहसंज्ञा, चतसृभिर्विकथाभिः, विरुद्धा कथा विकथा, स्त्रीकथा स्त्रीणां जातिरूपवेषादिवर्णनं, भक्तकथा सरसविरसरसवती वर्णनं, देशकथा लाटादिदेशवेषभाषाचारादि प्रशंसानिंदाभ्यां, राजकथा राज्ञः कोशादिसंपत् युद्धादिकला प्रशंसानिंदाभ्यां, चतुर्भिर्ध्यानैः, यो मयाऽशुभध्यानकरणशुभध्यानाऽकरणरूपोऽतिचारः कृत', ध्यानस्वरूपं तु ध्यानशतकाद् ज्ञेयं ॥ १२ ॥

पडिक्कमामि पंचहिं किरिआहिं काइआए अहिगरणिआए पाउसिआए पारितावणिआए पाणाइवायकिरिआए ॥ १३ ॥

पंचभि क्रियाभि., ता एवाह, कायेन निवृत्ता कायिकी क्रिया, गमनादिका, अधिकरणेन निवृत्ता अधिकरणिकी, पशुवधादि

प्रयर्त्तनखड्गादिशस्त्रकरणरूपा, प्राद्वेषिकी, जीवाजीवादिषु प्रद्वेषं कुर्वत, पारितापनिकी स्वपरदेहसंतापनाभ्यां, प्राणातिपातक्रिया स्वपरप्राणिघातं कुर्वतः ॥ १३ ॥

पडिक्कमामि पंचहिं कामगुणेहिं। सद्देणं रूवेणं रसेणं गंधेणं फासेणं, । पडिक्कमामि पंचहिं महव्वएहिं । पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं । पडिक्कमामि पंचहिं समिईहिं । इरिआसमिइए भासासमिइए एसणासमिइए आयाण-भंडमत्तनिक्खेवणासमिइए उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणिआसमिइए ॥ १४ ॥

प्रतिक्रमामि पंचभि कामगुणैः, कामाः शब्दादयस्त एव गुणास्तैः, प्रतिषिद्धकरणादिनातिचारः ॥ पंचभिर्महाव्रतैः अत्रापि, प्रतिषिद्धकरणादिनातिचारः ॥ पंचभिः समितिभिः, शोभना एकाग्रपरिणामस्य चेष्टा समिति, भांडमात्रादाननिक्षेपसमितिः, आर्षत्वात् आदानशब्दस्य पूर्वनिपातः, उच्चारप्रस्रवणे विण्मूत्रे, खेल श्लेष्मा, सिंघानको नाशिकोद्भवः, जल्लो मल, तेषां परिष्ठापनिका विधिना व्युत्सर्जनम् ॥ १४ ॥

पडिक्कमामि छहिं जीवनिकाएहिं । पुढविकाएणं आउकाएणं तेउकाएणं वाउकाएणं वणस्सइकाएणं तसकाएणं । पडिक्कमामि छहिं लेसाहिं। किण्हलेसाए नीललेसाए काऊलेसाए तेऊलेसाए पम्हलेसाए सुक्कलेसाए । पडिक्कमामि सत्तहिं भयठाणेहिं ॥ १५ ॥

षड्भिर्जीवनिकायै, प्रतिषिद्धकरणादिना योऽतिचारः, षड्भिर्लेश्याभिः, लेश्या आत्मपरिणाम, आसां स्वरूपं जंबूखादकग्राम-घधकषट्पुरुषदृष्टांतेन ज्ञेयम्। सप्तभिर्भयस्थानैः, तानि च एतानि, मनुष्यादे इहलोकादूभयं, विजातीयाद्देवादेर्भयं परलोकभयं आदानं धन, तदर्थं चौरादिभ्यो भय आदानभयं, बाह्यनिमित्तनिरपेक्षं अकस्माद्भयं, आजीविकाभयं निर्धनस्य, मरणभयं प्रतीतं, अयशोभयं च ॥ १५ ॥

## अट्ठहिं मयठाणेहिं । नवहिं बंभचेरगुत्तीहिं । दसविहे समणधम्मे ॥ १६ ॥

अष्टभिर्मदस्थानै, जातिकुलरूपबललाभश्रुततपोविभवमेदै, नवब्रह्मगुप्तिभि, वसहीकहनिसिज्जिंदिअ। कुड्डितरपुव्वकीलीपपणिए॥ अइमायाहारविभुसणाइ नव बंभचेरगुत्तीओ ॥ १ ॥ इतिगाथोक्ताभि ॥ दशविधे क्षान्त्यादिके श्रमणधर्मे योऽतिचार ॥ १३ ॥

## इगारसहिं उवासगपडिमाहिं ॥ १७ ॥

एकादशभिः उपासकप्रतिमाभिः, प्रतिमा अभिग्रहविशेषाः, आद्यायां मासं यावत् निरतिचारं सम्यक्त्वं पालनीयं। द्वितीयायां द्विमासौ निरतिचारव्रतधारकः स्यात्। तृतीयायां त्रीन् मासान् कृतसामायिकः काल एव प्रतिक्रमणं करोति। चतुर्थ्यां चतुरो मासान् चतुःपर्व्यां पूर्णं पौषधं करोति। पंचम्यां पौषधदिनेषु रात्रौ कायोत्सर्गं करोति स्नानरहितः, रात्रौ चतुर्विधाहार प्रत्याख्यात, दिवाब्रह्मचारी, रात्रो कृतपरिणामः ॥ षष्ठ्यां षण्मासान् ब्रह्मचारी कच्छां च दधाति ॥ सप्तम्यां सचित्ताहारवर्जी ॥ अष्टम्यां स्वयमारंभवर्जी ॥ नवम्यां अन्यैरपि न कारयति ॥ दशम्यां उद्दिष्टं न भुंक्ते ॥ एकादश्यां श्रमणवद्विहरति, मुंडितशिरसा शिखाको वा पूर्वो विधिः अग्रे अग्रे ज्ञातव्यः ॥ एतासु वितथप्रज्ञापनाऽश्रद्धानादिनाऽतिचार ॥ १७ ॥

## बारसहिं भिक्खुपडिमाहिं ॥ १८ ॥

द्वादश भिक्षुप्रतिमाः, आद्यायां मासं यावत् जघन्यतोऽपि नवमपूर्वतृतीयवस्तुसूत्रधारी महसेव साधुरलेपभक्तग्राही, भक्तपानयोरेकैकां दतिं लाति, एवं द्विमासिक्यां द्वे दत्ती ३।४।५।६ यावत्सप्तमासिक्यां सप्तदत्तयः । अष्टम्यां सप्तरात्रिक्यां चतुर्थभक्तकेनाऽपानकेन ग्रामाद् बहि कायोत्सर्ग, उत्तानादिस्थानस्थितो दिव्याद्युपसर्गान् सहते । नवम्यां सप्तरात्रिक्यां बहिरुत्कटिको दंडायतो वा तिष्ठते । दशम्यां सप्तरात्रिक्यां गोदोहिकावीरासनादिकारी भवेत् । एकादश्यामहोरात्रिक्यां षष्ठभक्तकेनाऽपानकेन ग्रामाद्बहि कायोत्सर्गेण तिष्ठति । द्वादश्यामेकरात्र्यां अष्टमभक्तेन ईषत्प्राग्भारगताऽनिमेषनेत्र कायोत्सर्गे तिष्ठति । अत्र चाऽश्रद्धानादिनातिचारः कृत ॥ १८ ॥

## तेरसहिं किरिआगणेहिं ॥ १९ ॥

अर्थाय क्रिया (१) अनर्थाय क्रिया (२) हिंसाक्रिया (३) अकस्मात् क्रिया, अन्यं प्रति, शरं मुंचति अन्यस्मै च यस्यां लगति (४) दृष्टिविपर्यासक्रिया, मित्रममित्रं मन्यमानस्य एवं मातरममातरमित्यादि (५) मृषाक्रिया (६) अदत्तादानक्रिया (७) न कोऽपि विरूपं भाषते, तथापि हृदि दुर्मना भवति यस्यां साऽध्यात्मक्रिया (८) मानेन परं हीलयतो मानक्रिया (९) अल्पेऽपि अपराधे तीव्रदंडकरणं अमित्रक्रिया (१०) मायाक्रिया (११) कामार्थी स्वं रक्षन् परान् हिंसति यस्यां सा लोभक्रिया (१२) साधोः समितस्य इर्यापथक्रिया (१३) ॥ १९ ॥

## चउदसहिं भूअगामेहिं। पन्नरसहिं परमाहम्मिएहिं। सोलसहिं गाहासोलसएहिं। सत्तरसविहे असंजमे ॥२०॥

चतुर्दशभूतग्रामा ( १४ ) जीवभेदाः, सूक्ष्म, बादर एकेंद्रिया, ( २ ) द्वींद्रिय ( ३ ) त्रींद्रिय ( ४ ) चतुरिंद्रिय ( ५ ) संज्ञि, असंज्ञि पंचेंद्रिया ( ७ ) पर्याप्ता अपर्याप्ताश्च, एवं ( १४ ) ॥ पंचदशपरमाधार्मिका, परमाश्च ते अधार्मिकाश्च, ते, अश्रद्धानतोऽतिचार ॥ षोडशभिर्गाथाषोडशकै, सूत्रकृतांगाद्यश्रुतस्कंधाध्ययनै ॥ सप्तदशविधे असंयमे, पृथ्वी ( १ ) अप् ( २ ) तेजो ( ३ ) वायु ( ४ ) वनस्पति ( ५ ) द्वि ( ६ ) त्रि ( ७ ) चतुः ( ८ ) पचेंद्रियाः ( ९ ) अजीवा ( १० ) प्रेक्षा ( ११ ) उपेक्षा ( १२ ) प्रमार्जना ( १३ ) परिष्ठापन ( १४ ) मनः ( १५ ) वचः ( १६ ) कायः ( १७ ) इति भेदा ॥ २० ॥

## अट्ठारसविहे अबंभे । एगुणवीसाए नायज्झयणेहिं । वीसाए असमाहिट्ठाणेहिं ॥ २१ ॥

अष्टादशविधे अब्रह्मणि, दिव्यौदारिककामानां, प्रत्येकं मनोवचःकायैः करणकारणानुमतिरूपः ॥ एकोनविंशत्या ज्ञाताधर्माद्य-श्रुतस्कंधाध्ययनै अत्राऽकरणाऽश्रद्धानजोऽतिचार ॥ विंशत्या असमाधिस्थानैः, असमाधेर्मोक्षमार्गाऽनवस्थितेः, स्थानानि ( २० ) द्रुतद्रुतगामित्वं, पतनादिना स्वपरयोरसमाधिकारित्वादसमाधिस्थानं ( १ ) अप्रमार्जिते देशे स्थानादकुर्वतः ( २ ) एवं दुष्प्रमार्जिते ( ३ ) अतिरिक्तशय्यासेवो, दीर्घायां वसतौ अन्येऽप्यायाति, तैः सह कलहोत्पत्तौ असमाधिः ( ४ ) अतिरिक्तासन-पीठफलधारित्वं ( ५ ) रत्नाधिकपरिभवकारी ( ६ ) ज्ञानादिस्थविरोपघाती ( ७ ) भूतोपघाती ( ८ ) पुनः पुन कोपी ( ९ ) नित्यक्रोधी ( १० ) पृष्ठौ अवर्णवादी ( ११ ) अभीक्ष्णं एवमेव एतदिति अवधारणभाषी ( १२ ) अधिकरणोदीरकः ( १३ ) अकालस्वाध्यायकारी ( १४ ) अस्थंडिलात् स्थंडिलं यात्वा पादौ न प्रमार्जयति, सरजस्कपाणिभ्यां भिक्षाग्राही, अशुद्धपृथिव्यां वा शेते निषीदति ( १५ ) विकालेऽपि महता शब्देन भाषते, गृहिभाषया वा ( १६ ) कलहकारी ( १९ ) झंझाकारी गणभेदकारी वा ( १८ ) अप्रमाणभोजी ( १९ ) अनेषणां न त्यजति ( २० ) एतानि स्वपरयोरसमाधिहेतुत्वादसमाधिस्थानानि ॥ २१ ॥

## इकवीसाए सबलेहिं ॥ २१ ॥

एकविंशत्या शबलै क्रिया विशेषैः, चारित्रशबलतानिमित्तै, कलुषताहेतुभिरित्यर्थः ॥ हस्तकर्म कुर्वन् ( १ ) सालंबनदिव्यादि-मैथुनसेवमान ( २ ) सालंबनरात्रिभोजन ( ३ ) आधाकर्मभुक्ति ( ४ ) राजपिंड ( ५ ) क्रीन ( ६ ) प्रामित्य ( ७ ) अभ्याहृत ( ८ ) आछेद्यभुक्ति ( ९ ) प्रत्याख्यातभक्तभोजनत ( १० ) षण्मासमध्ये गणाद्गणसंक्रमं कुर्वन् ( ११ ) मासांतस्त्रीनुदकलेपान् कुर्वाणः ( १२ ) मासांतस्त्रीणि मातृस्थानाने कुर्वन् ( १३ ) उपेत्य पृथ्व्यादि प्राणिनो हिंसन् ( १४ ) मृषावदन् ( १५ ) अदत्तं गृह्णन् ( १६ ) अशुद्धपृथ्व्यां स्थानादि कुर्वन् ( १७ ) आकुट्या मूलफलादिभोजी ( १८ ) वर्षांतर्दशोदकलेपान् कुर्वन् ( १९ ) वर्षांतर्दश च मातृस्थानानि कुर्वाण ( २० ) शीतोदकसंसृष्टहस्तमात्रदत्तभक्तभोजी ( २१ ) शबल इति सर्वत्र योज्यं ॥ २२ ॥

## बावीसाए परीसहेहिं ॥ २३ ॥

द्वाविंशत्या परीषहै, क्षुत् ( १ ) पिपासा ( २ ) शीत ( ३ ) उष्ण ( ४ ) दंशमशक ( ५ ) अचेल ( ६ ) अरति ( ७ ) स्त्री ( ८ ) मासकल्पाविहारचर्या ( ९ ) निषद्या ( १० ) शय्या ( ११ ) आक्रोश ( १२ ) वध ( १३ ) यांचा ( १४ ) अलाभ ( १५ ) रोग ( १६ ) तृण स्पर्श ( १७ ) मल ( १८ ) सत्कार ( १९ ) प्रज्ञा ( २० ) अज्ञान ( २१ ) सम्यत्तव ( २२ ) रूपैः ॥ २३ ॥

तेवीसाए सुअगडज्झयणेहिं । चउवीसाए देवेहिं (अरिहंतेहिं)। पणवीसाए भावणाहिं । छव्वीसाए दसाकप्पव-

ववहाराणं उद्देसणकालेहिं सत्तावीसाए अणगारगुणेहिं ॥ २४ ॥

त्रयोविंशत्या सूत्रकृतांगाध्ययनैः । चतुर्विंशत्या देवैः, भवनपति ( १० ) व्यंतर ( ८ ) ज्योतिष्क ( ५ ) एकविधवैमानिकरूपैः । वर्त्तमानैः ( २४ ) जिनैर्वा ॥ व्रत व्रतं प्रति पंच पंच संख्याभि, एवं पचविंशत्याभावनाभिः ॥ षड्विंशत्या दशाकल्पव्यवहाराणामुद्देशनकालैः, श्रुतोपचाररूपैः ॥ सप्तविंशत्याऽनगारगुणैः, व्रत ( ६ ) इंद्रियनिग्रह ( ५ ) भावसत्य ( १ ) क्षमा ( २ ) निर्लोभता, मनोवाक्कायजयः ( ३ ) काय ( ६ ) यतना, संयमयोगयुक्तता ( १ ) वेदनासहन ( १ ) उपसर्गसहनरूपैः ॥ २४ ॥

अट्ठावीसाए आयारप्पकप्पेहिं । एगुणतीसाए पावसुअप्पसंगेहिं ॥ २५ ॥

अष्टाविंशत्याचारप्रकल्पैराद्यांगाध्ययनरूपैः ॥ एकोनत्रिंशता पापश्रुतीनां प्रसंगैः, देवाट्टहासादिदिव्यं ( १ ) ग्रहयुद्धादि-अंतरिक्षं ( २ ) भूमिकंपादिर्भौमं ( ३ ) उत्पातं ( ४ ) अगं ( ५ ) स्वरं ( ६ ) व्यंजनं ( ७ ) लक्षण ( ८ ) सूत्रवृत्तिवार्त्तिक भेदैः, ( २४ ) गांधर्व ( २५ ) नाट्य ( २६ ) वास्तु ( २७ ) धनुर्वेद ( २८ ) आयुर्वेदैः ( २९ ) ॥ २५ ॥

तीसाए मोहणीअठाणेहिं ॥ २६ ॥

त्रिंशता मोहनीयस्थानैः, तानि यथा, किंचिन्नर ( टं ) नीरमध्ये क्षिप्त्वा हिंसन् ( १ ) मुखाद्याच्छाद्य श्वासरोधात् हिंसन् ( २ ) शीर्षे वर्द्धादिवेष्टनात् हिंसन् ( ३ ) मयूरबंधादिना घ्नन् ( ४ ) बहुजननेतारं प्रभुं हिंसन् ( ५ ) बहुजनाधारभूतं श्रेष्ठ्यादिकं घ्नन् ( ६ ) साधारणे ग्लाने समर्थोऽपि भेषजाद्यकारयन् ( ७ ) साधुं मार्गाद् ज्ञानादेर्भ्रंशयन् ( ८ ) जिनाऽवर्णवादी ( ९ )

पश्चाद्गुरोरालोचन ( १४ ) एव उपदर्शन ( १५ ) निमंत्रणं च ( १६ ) गुरुं अनापृच्छ्य यथारुचि साधुभ्यो दानं ( १७ ) गुरोर्यत्किञ्चिद्दत्वा स्वयं सरसाहारादिभोजन ( १८ ) रात्रिवत् शेषकालेऽपि अप्रतिश्रवणं ( १९ ) गुरुप्रति निष्ठुरभणनं ( २० ) स्वस्थानस्थ एव उत्तरं गुरोर्दत्ते ( २१ ) गुरुप्रति किमितिवदनं ( २२ ) गुरुंप्रतित्वंकार ( २३ ) गुरुणा आदिष्टो यूयमेव किं न कुरुथ इति वदत ( २४ ) गुरौ वदति असावधानत्वं ( २५ ) न स्मरसि त्वमिति वचनं ( २६ ) स्वयं कथनेन कथाछेद ( २७ ) अधुना भिक्षावेला इत्यादिमिषे पर्षद्भेदनं ( २८ ) अनुत्थितायां पर्षदि विशेषकथन ( २९ ) गुरुशय्यादेः पादेन घट्टनं ( ३० ) गुरुशय्यादौ निषीदन ( ३१ ) उच्चासने ( ३२ ) समासने ( ३३ ) इति, अथवा त्रयस्त्रिंशदाशातना ( ३३ ) अर्हदादिविषयाः सूत्रकार एव प्राह—॥ २८ ॥

अरिहंताणं आसायणाए । सिद्धाणं आसायणाए । आयरिआणं आसायणाए। उवज्झायाणं आसायणाए । साहूणं आसायणाए । साहुणीणं आसायणाए । सावयाणं आसायणाए । सावियाणं आसायणाए । देवाणं आसायणाए । देवीणं आसायणाए इहलोगस्स आसायणाए । परलोगस्स आसायणाए । केवलिपन्नत्तस्स धम्मस्स आसायणाए । सदेवमणुआसुरस्स लोगस्स आसायणाए । सव्वपाणभूअजीवसत्ताणं आसायणाए । कालस्स आसायणाए । सुअस्स आसायणाए । सुयदेवयाए आसायणाए । वायणारिअस्स आसायणाए । जं वाइद्धं । वच्चामेलिअं । हीणक्खरं । अच्चक्खरं । पयहीणं । विणयहीणं । घोसहीणं । जोगहीणं । सुट्ठुदिन्नं । दुट्ठुपडिच्छियं । अकाले कओ सज्झाओ । काले न कओ सज्झाओ । असज्झाइए । सज्झाइअं । सज्झाइए न सज्झाइअं । तस्स मिच्छामि दुक्कडं ॥ २९ ॥

इत्थं ठिआ जीवा सिज्झंति। बुज्झंति। मुच्चंति। परिनिव्वायंति। सव्वदुक्खाणमंतं करंति ॥ ३३ ॥

अत्र नैर्ग्रंथ्ये प्रवचने स्थिता जीवा सिद्ध्यन्ति, आणिमादिसिद्धीः प्राप्नुवन्ति, बुध्यन्ते केवलिनो भवन्ति, मुच्यन्ते कर्मभिः, परि समन्तात् नर्वाति सुखिनः स्युः, सर्वदु ग्वानां अन्तं विनाशं कुर्वंति।—॥ ३३ ॥

एवमुक्त्वा श्रद्धानमाह—

तं धम्मं सद्दहामि। पत्तिआमि। रोएमि। फासेमि। पालेमि। अणुपालेमि। तं धम्मं सद्दहंतो। पत्तिअंतो। रोअंतो।। फासंतो। पालंतो अणुपालंतो। तस्स धम्मस्स केवलिपन्नत्तस्स। अब्भुट्ठिओमि आराहणाए। विरओमि विराहणाए। असंजमं परिआणामि। संजमं उवसंज्जपामि। अबंभं परिआणामि बंभं उवसंपज्जामि ॥ ३४ ॥

य एष नैर्ग्रंथ्यलक्षणो धर्मस्तं श्रद्धे प्रतिपद्ये प्रीतिकरणद्वारेण रोचयामि, अभिलाषातिरेकेण प्रीतिरुची भिन्ने, क्वचिद्, दध्यादौ प्रतिभावेऽपि यतो न रुचिः सर्वदा, स्पृशामि आसेवनाद्वारेण, अनुपालयामि सततकारणेन तं धर्मं श्रद्धानः, प्रतिपद्यमानः। रोचयन् स्पृशन् अनुपालयन् तस्य धर्मस्य प्रागुक्तस्य अभ्युत्थितोऽस्मि आराधनायां, विरतोऽस्मि, विराधनायां, असंयमं प्राणातिपातादिरूपं परिजानामि, प्रत्याख्यामि, तद्विपरीतं संयमं उपसंपद्ये, अब्रह्म परिजानामि अस्य च असंयमप्रधानात्वाद् भेदेन अभिधानं, ब्रह्म उपसंपद्ये ॥ ३४ ॥

नमश्चतुर्विंशतितीर्थकरेभ्यः, ऋषभादिमहावीरपर्यवसानेभ्य, प्रस्तुतमाह-इदमेव द्वादशांगम्, निर्ग्रंथानामिदं नैर्ग्रन्थं, प्रकर्षेण आ मर्यादया उच्यन्ते जीवादयो यत्र तत् प्रावचनम्, सत्यं सद्भ्यो हितम्, नयदर्शनमपि स्वविषये सत्यं स्यादित्यत आह— नास्योत्तरं अस्त्यनुत्तरम्, यथास्थित सर्ववस्तुप्रतिपादकत्वादुत्तमम्, ॥ ३० ॥ अन्यदप्येव भविष्यतीत्याह—

केवलियं पडिपुन्नं। नेआउयं। संसुद्धं। सल्लगत्तणं ॥ ३१ ॥

केवलिकं केवलमसहायमद्वितीयमित्यर्थ, नाऽपरमित्थंभूतमिति यावत्, केवलमेव कैवलिकम्, प्रतिपूर्णं मोक्षप्रापकगुणैर्भृतम्, नैयायिकम् न्यायोपपन्नम्, सं सामस्त्येन शुद्धम्, एकांताऽकलंकमित्यर्थः, शल्यकर्त्तनं भवहेतुमायादिशल्यच्छेदकम्,—॥ ३१ ॥

परमतनिषेधनार्थमाह—

सिद्धिमग्गं। मुत्तिमग्गं। निज्जाणमग्गं। निव्वाणमग्गं। अवितहमविसंधि। सव्वदुक्खप्पहीणमग्गं ॥ ३२ ॥

सिद्धेर्हितार्थप्राप्तेर्मार्गः, मुक्तेः कर्मक्षयरूपाया मार्गः, एतेन हितार्थकेवलज्ञानादिविकला सकर्मकाश्च मुक्ता इति मतं निरस्तम्; निरुपमं यानं निर्याणम्, सिद्धशिलेत्यर्थः, तस्य मार्ग, अनेन सर्वत्र मुक्तास्तिष्ठंतीति मतं निरस्तम्। निर्वाणमात्यंतिकं सुखम्, तस्य मार्गः, अनेन निःसुखदुःखा मुक्तात्मान इति मत निरस्तम्, अवितथं सत्यम्, अविसंधि अव्यवच्छिन्नम्, विदेहादिषु सदा भावात्। सर्वदुःख-प्रक्षीणो मोक्षस्तस्य मार्गः ॥ ३२ ॥ परार्थकारणेन अस्य चिंतामणित्वमाह—

आह—प्रतिहतं इदानीं अकरणतया प्रत्याख्यातं, अतीतं निंदया, गर्ष्यमकरणेन पापकर्म येन स., तथा प्रधानोऽयं दोष इति, तत्पृच्छन्यतां आत्मनो भेदेनाह—अनिदानो निदानरहित दृष्टिसंपन्न, सम्यग्दर्शनयुक्त, मायामृषाविवर्जक:, मायागर्भमृषावादमुक्त, एवं भूत सन् किम्? अर्द्धतृतीयेषु द्वीपसमुद्रेषु जम्बूद्वीपादिषु पञ्चदशसु कर्मभूमिषु, पञ्चभरतपञ्चैरवतपञ्चमहाविदेहेषु यावन्त: केचन साधव. रजोहरणगोच्छप्रतिग्रहधारिण:, ॥ ३८ ॥

निद्रपाद्विप्यगच्छेरमाह —

अकप्पं परिआणामि। कप्पं उवसंपज्जामि। अन्नाणं परिआणामि। नाणं उवसंपज्जामि। अकिरिअं परिआणामि। किरिअं उवसंपज्जामि। मिच्छत्तं परिआणामि। सम्मत्तं उवसंपज्जामि। अबोहिं परिआणामि। बोहिं उवसंपज्जामि। अमग्गं परिआणामि। मग्गं उवसंपज्जामि। जं संभरामि। जं च न संभरामि। जं पडिक्कमामि। जं च न पडिक्कमामि। तस्स सव्वस्स देवसिअस्स। अइआरस्स पडिक्कमामि ॥ ३५ ॥

अकल्पोऽकृत्यम्, कल्पः कृत्यम्, अज्ञानं सम्यग् ज्ञानादन्यत्, ज्ञानं तु जिनवचनम्, अक्रिया नास्तिकवादः, क्रिया सम्यग्दर्शनम्, मिथ्यात्व जिनोक्तादन्यत्, अबोधि मिथ्यात्वकार्यम्, बोधिः सम्यक्कार्यम्, अमार्गो बौद्धादिदर्शनम्, मार्गो जिनशासनम्; यत्किंचित् स्मरामि, यच्च अनाभोगान्न स्मरामि, यत् प्रतिक्रमामि आभोगात् ज्ञातम्, यच्च न प्रतिक्रमामि सूक्ष्मत्वात् अज्ञातम्, अनेन प्रकारेण यः कश्चिदतिचार, तस्य सर्वस्य प्रतिक्रमामि ॥ ३५ ॥

एव प्रतिक्रम्याह—

समणोहं संजयविरयपडिहयपच्चक्खायपावकम्मे। अनियाणो। दिट्ठिसंपन्नो। मायामोसविवज्जिओ। अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु। जावंति केवि साहू। रयहरणगुच्छपडिग्गहधारा ॥ ३६ ॥

श्रमणोऽहं, तथापि न चरकादि, किं तर्हि संयतः, विरतो निर्वृत्तोऽतीतस्य, एष्यस्य संवरणद्वारेण; अत

ॐ

# ॥ श्रीपाक्षिकसूत्रम् ॥

## ( अवचूरिसमलङ्कृतम् )

"श्रीवीरजिनं नत्वा । स्पष्टार्थां श्रीगुरुप्रसादेन ॥ श्रीमत्पाक्षिकसूत्रावचूरिमेतां लिखामि जडः ॥ १ ॥" इहार्हत्प्रवचनानुसारिसाधवः सर्वसावद्ययोगनिवृत्ता अपि सुविशुद्धमनोवाक्कायवृत्तयोऽप्यनाभोगप्रमादादेः प्रतिषिद्धकरणकृत्याऽकरणाद्युत्पन्नस्य मूलोत्तरगुणगोचरस्य बादरेतरातिचारजातस्य विशुद्ध्यर्थम् सदा दिवसनिशावसानेषु प्रतिक्रामन्तोऽपि पक्षचतुर्माससंवत्सरान्तेषु विशिष्य प्रतिक्रामन्ति उत्तरकरणविधानार्थम्, यथाहि—कश्चित्तैलामलकजलादिभिः कृतवपुःसंस्कारोऽपि धूपनविलेपनभूषणवस्त्रादिभिरुत्तरक्रियां विधत्ते, एवं साधवोऽपि प्रतिदिनप्रतिक्रमणेन विशुद्धचरणा अपि पाक्षिकादिषु विशेषप्रतिक्रमणेनोत्तरकरणं कुर्वन्ति शुद्धिविशेषं कुर्वन्तीत्यर्थ. किञ्च—"जहा गेहं पइदिवसंपि । सोहिअ तहवि पक्खसंधीसु ॥ सोहिज्जइ सविसेसं । एवं इहयंपि नायव्वं ॥ १ ॥ तथा नित्यप्रतिक्रमणे सूक्ष्मो बादरो वा अतिचारोऽनाभोगादिना विस्मृतः स्यात्, स्मृतो वा भयगौरवात् गुरुसमक्षं न प्रतिक्रान्तः स्यात्, प्रतिक्रान्तोऽपि परिणाममान्द्यादसम्यग्प्रतिक्रान्त स्यात्, अतः पाक्षिकादिषु तं स्मृत्वा सञ्जातसंवेगाः प्रति-

क्षामन्ति, यद्वा अतिचाराऽभावेऽपि युक्तं पाक्षिकादिषु विशेषप्रतिक्रमणं तृतीयवैद्यौषधक्रियातुल्यत्वात्। यथाहि तद्रसस्य पूर्वोत्पन्नरोगमुपशमयति, बलवर्णरूपयौवनलावण्यतया परिणमति, अनागतव्याधिप्रतिबन्धाय च जायते, एवमिदमपि प्रतिक्रमणं संभवेऽतिचारदोषान् शोधयति, नो चेच्चारित्रं शुद्धत्तर करोतीति, तत स्थितमेतदतिचारो भवतु वा मा वा, तथापि प्रथमचरमतीर्थकरतीर्थेषु पक्षान्तादिषु प्रतिक्रमणं कर्तव्यमेवेति। तत्र च प्रत्येकक्षामणादनु गुरुर्गुरुसंदिष्टो वा पाक्षिकं प्रतिक्रमणं कथयति, शेषा यथाशक्तिकायोत्सर्गादिस्थिता. शृण्वन्ति, तच्चेद सूत्रम्:—

**तित्थंकरे अ तित्थे, अतित्थसिद्धे अ तित्थसिद्धे अ। सिद्धे जिणे रिसी मह–रिसी य नाणं च वंदामि॥ १ ॥**

तित्थं०—अनुस्वारः प्राकृतत्वात्. ततस्तीर्थं वक्ष्यमाणं कुर्वन्त्यानुकूल्येन हेतुत्वेन तच्छीलतया वेति तीर्थकरास्तान् वन्दे इति सर्वत्र योग, चशब्दोऽतीतानागतादितीर्थकृद्वृन्दसंग्रहार्थः, विभक्तिव्यत्ययात्तीर्यते संसारोऽनेनेतितीर्थं जिनप्रवचनम्, तदाधारत्वाच्चतुर्वर्णश्रमणसंघश्च, तत्कर्मतापन्नं वन्दे। अतीर्थे तीर्थाभावे बुद्धा जातिस्मरणादिना लब्धापवर्गमार्गाः, पाठांतरतोऽतीर्थे सिद्धा वा जातिस्मरणादिनैव निर्दग्धकर्माणस्तान्, चः समुच्चये, श्रूयते च सुविधिप्रभृतीनां तीर्थकृतां सप्तस्वन्तरेषु

“जिण अजिण तित्थऽतित्था । गिहिअन्नसलिंगथीनरनपुंसा ॥ पत्तेअ सयंबुद्धा । बुद्धबोहिय सिद्धणिक्काय ॥ १ ॥” व्याख्या-सिद्ध-शब्दः *प्रत्येकं योज्यते, तीर्थंकरसिद्धा जिना· ऋषभादिवत्, अतीर्थसिद्धाः सामान्यकेवलिन· सन्तो ये सिद्धा गौतमादिवत्, एवं तीर्थातीर्थसिद्धा उक्ताः, गृहलिंगसिद्धा मरुदेव्याद्या·, अन्यलिंगसिद्धाः चरकपरिव्राजिकादिलिंगसिद्धा·, यदा अन्यलिंगिनामपि भावतः सम्यक्त्वादिप्रतिपन्नानां केवलज्ञानमुत्पद्यते, तत्समय च कालं कुर्वंति, तदैवं द्रष्टव्यम्, अन्यथा यदि दीर्घमायुष्कमात्मनः पश्यन्ति, ततः साधुलिंगमेव प्रतिपद्यन्ते, स्वलिंगसिद्धा·, द्रव्यलिंगं प्रतीत्य ये रजोहरणादिधारणे सिद्धा· प्रत्येकबुद्धवर्जिता· केचित्स्त्रीलिंगसिद्धाः, केचित्पुरुषलिंगसिद्धा, केचित्तीर्थंकरप्रत्येकबुद्धरहिता नपुंसकलिंगसिद्धाः, प्रतीत्यैकं किञ्चिद्वृषभादिकमनित्यतादिभावनाकारणं वस्तु बुद्धाः परमार्थमिति एवंविधाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः, एवं स्वयमात्मना बुद्धा· सन्तो ये सिद्धास्ते स्वयंसम्बुद्धसिद्धाः, प्रत्येकबुद्धस्वयंबुद्धानां च बोध्युपधिश्रुतलिंगकृतो विशेषस्थाहि, प्रत्येकबुद्धानां वृषभादिबाह्यनिमित्तेनैव बोधि, स्वयंबुद्धानां तं विनापि बोधिः, प्रत्येकबुद्धाना जघन्यतो रजोहरणमुखपोतिकारूपो द्विविध उपधिः, उत्कृष्टनः पुनश्चोलपट्टमात्रककल्पत्रिकवर्जो नवविधः, स्वयंबुद्धानां तु पात्रादिर्द्वादशविधः, यदुक्त—“पत्तं पत्ताबंधो । पायट्ठवणं पायकेसरीआ ॥ पडलाइ रयत्ताणां च । गुच्छओ-पायनिजोगो ॥ १ ॥ तिन्नेव य पच्छागा । रयहरणं चेव होइ मुहपत्ति ॥ एसो दुवालसविहो । उवहिं जिन कप्पिआणंतु ॥ २ ॥ प्रत्येक-बुद्धानां पूर्वाधीतश्रुतं नियमाद्भवति, जघन्येनैकादशांगानि, उत्कृष्टतो भिन्नदशपूर्वाणीति । स्वयंबुद्धानां पुनस्तत्संभवति वा न वा, यदि पूर्वाधीतं श्रुत नास्ति, ततो नियमाद्गुरुपार्श्वे स्युर्गच्छे च विहरन्ति, प्रत्येकबुद्धानां लिंगं देवतैव दत्ते, लिंगर्जिता वा भवति, अथ श्रुतं स्यात्ततो लिंगं देवता दत्ते, गुरुसमीपे वा तत्प्रतिपद्यंते, इच्छया योग्यतया चैकाकिनो विहरति, गच्छे वा वसंति। बुद्धबोधिता आचार्यादिबोधिताः सन्तो ये सिद्धाः, एकैकसमये एकैकजीवसिद्धिगमनादेकसिध्धाः । एकसमये द्व्यादीनामष्ट-

*सर्वत्र

शतान्तानां सेधनादनेकमिद्धाः, जिणेत्ति रागद्वेषादिशत्रुजेतारो जिनाः, भवस्थकेवलिनस्तान्, रिसित्ति ऋषयः, गच्छगतगच्छनिर्गतादिभेदाः साधवस्तान्, महर्षयोऽन्यत्तरलब्धियुक्तास्त एव तान्, ताश्च *आमर्षौषध्यादयः सुप्रतीताः, चशब्दात्परमर्षयो गृह्यन्ते, ते च गणधराश्चतुर्दशपूर्विणश्च नानाविधलब्धिनिधयो द्रष्टव्या, तथा ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं मतिज्ञानादि, च उक्तसमुच्चयेऽनुक्तदर्शनचारित्रसमुच्चये वा, वन्दे, ॥ १ ॥ अनेन च तीर्थकरादिवन्दनेन शास्त्रादौ भावमंगलं कृतम्, तेन च तत्कर्त्रध्येतृश्रोतॄणां निर्विघ्नाऽभीष्टसिद्धिर्जायते तथा—

**जे अ इमं गुणरयण-सायरमविराहिऊण तिण्णसंसारा। ते मंगलं करित्ता, अहमवि आराहणाभिमुहो ॥ २ ॥**

जेअइमं०—ये मुनय 'चः' मंगलांतरसमुच्चये, इमं जिनशासनप्रसिद्धम्, गुणा महाव्रतादयस्त एव विशिष्टफलहेतुत्वात्सर्ववस्तुसारत्वाच्च गुणरत्नानि तान्येव बहुत्वात्सागरस्तं अविराध्याखंडमनुपाल्य तीर्णसंसारास्तान् परमात्मनो मंगलं कृत्वा शुभमनोवाक्कायगोचरं समानीयेत्यर्थः, अहमपि संसारार्णवलंघनार्थमाराधनाया मोक्षमार्गानुपालनाया अभिमुखः कृतोद्यम इत्यर्थः, ॥ २ ॥ तथा—

---

*आमोसहि (१) विप्पोसहि (२) खेलोसहि (३) जल्लोसहिचेव (४) सव्वोसहि (५) समिन्ने (६) ओही (७) रिउ (८) विउलमइलद्धी (९) ॥१॥ चारण (१०) आसीविस (११) केवली य (१२) गणधारिणो य (१३) पुव्वधरा (१४) अरहन्ता (१५) चक्कवट्टी (१६) बलदेवा (१७) वासुदेवा य (१८) ॥२॥ खीर महुसप्पिरासव (१९) कोट्ठगबुद्धी (२०) पयाणुसारी य (२१) तह बीयबुद्धि (२२) तेयग (२३) आहारग (२४) सीयलेसा य (२५) ॥ ३ ॥ वेउव्विदेहलद्धी (२६) अक्खीणमहाणसी (२७) पुलागा य (२८) परिणामतववसेण एमाई हुंति लद्धीओ ॥ ४ ॥—

**मम मंगलमरिहंता, सिद्धा साहू सुयं च धम्मो अ । खंती गुत्ती मुत्ती, अज्जवया मद्दवं चेव ॥ ३ ॥**

मम०—मे मंगलमर्हंत, साधुग्रहणादाचार्योपाध्या अपि गृहीता एव, यतो न हि ते न साधवः, श्रुतं सामायिकाद्यागमः, चः तद्गतभेदप्रदर्शनार्थ., धर्मश्चारित्ररूपः, चः स्वभेददर्शकः ॥ क्षांति· क्षमा, गुप्ति· संलीनता, मुक्तिर्निर्लोभता, आर्जवता मायावर्जनं, मार्दवं मानत्यागः, चः समुच्चये, एव पूरणे, न चात्र स्तोतव्यपदानां पौनरुक्त्यं चिंत्यम्, यतः-सज्झायज्झाणतवोसहेसु। उवएसथुइपयाणेसु । संतगुणकित्तणासु य । न होन्ति पुणरुत्तदोसाउ ॥ ३ ॥ अथाराधनांगभूतामेव महाव्रतोच्चारणां कर्त्तुकाम आह—

**लोगम्मि संजया जं, करिंति परमरिसिदेसिअमुआरं । अहमवि उवट्ठिओ तं, महव्वयउच्चारणं काउं ॥ ४ ॥**

लोगमि०—लोके तिर्यग्लोके संयता यां महाव्रतोच्चारणां प्रत्यहमुभयकालं विशेषतस्तु पक्षान्तादिषु कुर्वन्ति, तां परमर्षिभिस्तीर्थकरगणधरैर्देशितां कथितां उदारां, विशिष्टकर्मक्षयहेतुत्वात्, अहमपि न केवलमन्ये साधव इत्यप्यर्थः, उपस्थितः प्रह्वीभूतस्तां पूर्वोक्तविशेषणविशिष्टां, महान्ति च तानि व्रतानि च, तेषामुच्चारणामुत्कीर्त्तनां कर्तुम् महत्त्वं चेषा सर्वजीवादिविषयत्वेन महाविषयत्वात्, यदुक्त—',पढमंमि सव्वजीवा । बीए चरिमे अ सव्वदव्वाइं ॥ सेसा महव्वया खलु । तदेक्कदेसेण दव्वाणं" ॥ ४ ॥ तत्र चेदमादिसूत्रं—

**से किं तं महव्वयउच्चारणा ? महव्वयउच्चारणा पंचविहा पण्णत्ता, राईभोअणवेरमणछट्ठा ॥ ५ ॥**

से किं तमित्यादि छट्ठा यावत्, इदं प्रश्नसूत्रमादावुपन्यस्यन्निदं ज्ञापयति, पृच्छतो विनेयस्य, 'मध्यस्थो बुद्धिमानर्थी, श्रोता पात्रमिति स्मृतः' इत्येतस्यैव श्रुतं देयं नान्यस्य, यतः-"आमे घडे निहत्तं । जहा जलं तं घडं विणासेइ ॥ इह सिद्धांतरहस्सं । अप्पाहारं विणासेइ" ॥ १ ॥ अयोग्यश्रुतप्रदाने च तस्य यदकल्याणं, तद्दातृकृतमेव, से शब्दोऽथशब्दार्थे, स च वाक्योपन्यासार्थः, ततः किं तद्वस्तु महाव्रतोच्चारणा, अथवा प्राकृतशैल्याभिधेयवल्लिंगवचनानि स्युरिति न्यायात्का सा महाव्रतोच्चारणा? एवं प्रश्ने कृते सति गुरुः शिष्यवचनानुरोधेनादरार्थं किञ्चिच्छिष्योक्तमुच्चार्याह-महाव्रतोच्चारणा पञ्चविधा प्रज्ञप्ता प्ररूपिता, प्रथमांतिमजिनयोस्तीर्थे रात्रिभोजनविरमण षष्ठं च। पञ्चविधत्वमुपदर्शयन्नाह—

तं जहा-सव्वाओ पाणाइवायाओ वेरमणं १ । सव्वाओ मुसावायाओ वेरमणं २। सव्वाओ अदिन्नादाणाओ वेरमणं ३। सव्वाओ मेहुणाओ वेरमणं ४। सव्वाओ परिग्गहाओ वेरमणं ५। सव्वाओ राईभोअणाओ वेरमणं ॥ ६ ॥

'तं जहा'—तद्यथेत्युपदर्शनार्थं, सर्वस्मात्सर्वस्वभेदयुक्तादग्रे वक्ष्यमाणस्वरूपात्प्राणातिपाताद्विरमणम्, एवमग्रेऽपि ॥ ६ ॥ एवं सामान्येन व्रतषट्कमुक्त्वा विशेषतस्तत्स्वरूपमाह—

तत्थ खलु पढमे भंते महव्वए पाणाइवायाओ वेरमणं, सव्वं भंते पाणाइवायं पच्चक्खामि, से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणे अइवाएज्जा, नेवन्नेहिं पाणे अइवायाविज्जा, पाणे अइवायंते वि अन्ने

न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥ ७ ॥

"तच्छत्यादि"—तत्र तेषु षट्सु व्रतेषु मध्ये, खलुशब्दान्मध्यमतीर्थकरप्रणीतेषु चतुर्यामेषु, वाक्यालङ्कारे वा खलु', प्रथमे सूत्रक्रमप्रामाण्यादाद्ये, भंतेति गुर्वामन्त्रणम्, भदत. सुखकल्याणहेतुत्वात् भवातो भयातो वा तदन्तकरत्वात्, प्राणानामिन्द्रियादीनामतिपातो विनाशो जीवस्य महादुःखोत्पादनम्, न तु जीवनाश एव, तस्माद्विरमणम्, सम्यग् ज्ञानश्रद्धानपूर्वकं सर्वथा निवर्त्तनम् भगवतोक्तमिति शेषः। यतश्चैवमत उपादेयमेतदिति विनिश्चित्य भदत सर्वं प्राणातिपातं प्रत्याख्यामि वर्जयामीत्यर्थः, अथवा प्रत्याचक्षे संवृतात्मा साम्प्रतमनागतप्रतिषेधस्यादरेणाऽभिधानं करोमीत्यर्थः। अनेन व्रतार्थपरिज्ञानादिगुणयुक्तो व्रतार्ह इत्यावेदयति ॥ से०—से तद्यथार्थे सूक्ष्मं, अत्र सूक्ष्मोऽल्पः परिगृह्यते, न तु सूक्ष्मनामकर्मोदयात्सूक्ष्मस्तस्य कायेन व्यापादानासंभवात्, बादरोऽपि स्थूलो, वाशब्दो परस्परापेक्षया समुच्चये, स चैकैको द्विधा त्रसः कुन्थ्वादि, स्थावरो वनस्पत्यादिः, बादरस्तु त्रसो गवादि, स्थावरः पृथिव्यादिः। अत्रापि वाशब्दो समुच्चयार्थः, एतान् पूर्वोक्तान् नैव स्वयमात्मना प्राणिनो जीवान्, विभक्तिव्यत्ययादतिपातयामि विनाशयामि, नैवान्यैः प्राणिनोऽतिपातयामि, प्राणिनोऽतिपातयतोऽप्यान्यान्न समनुजानामि, नानुमोदयामि, कथमित्याह—जावज्जीवाएत्ति—प्राकृतत्वाज्जीवनं जीवः प्राणधारणं, यावज्जीवो यावज्जीवं, परतस्तु न विधिर्नापि प्रतिषेधः, विधावाशंसादोषप्रसङ्गात्, प्रतिषेधे त्वविरतेषु सुरेषूत्पन्नस्य भङ्गप्रसंगात्, किमित्याह—तिस्रो विधा यस्य प्राणातिपातस्येति गम्यते, असौ त्रिविधस्त्रिविधेन करणेन, एतदेव दर्शयति, मनसा वचसा कायेन च, अस्य च करणस्य कर्म प्राणातिपातः, न करोमि स्वयं न कारयाम्यन्यैः, कुर्वन्तमप्यन्यं नानुजानामि, ननु करणकर्मणोः किं व्यत्ययनिर्देशः कृत, उच्यते, करणायत्ता कृतादिरूपा वर्त्तते, इति दर्शनार्थं, तथाहि-कृतादिरूपा क्रिया मनःप्रभृतिकरणवशैव, करणाना भावे क्रियाया अपि भावात् अभावे चाऽभावात्,

से किं तमित्यादि छट्ठा यावत्, इदं प्रश्नसूत्रमादावुपन्यस्यन्निदं ज्ञापयति, पृच्छतो विनेयस्य, 'मध्यस्थो बुद्धिमानर्थी, श्रोता पात्रमिति स्मृतः' इत्येतस्यैव श्रुतं देयं नान्यस्य, यतः-" आमे घडे निहत्तं । जहा जलं तं घडं विणासेइ ॥ इह सिद्धांतरहस्सं । अप्पाहारं विणासेइ " ॥ १ ॥ अयोग्यश्रुतप्रदाने च तस्य यदकल्याणं, तद्दातृकृतमेव, से शब्दोऽथशब्दार्थे, स च वाक्योपन्यासार्थः, ततः किं तद्वस्तु महाव्रतोच्चारणा, अथवा प्राकृतशैल्याभिधेयवल्लिंगवचनानि स्युरिति न्यायात्का सा महाव्रतोच्चारणा? एवं प्रश्ने कृते सति गुरुः शिष्यवचनानुरोधेनादरार्थं किञ्चिच्छिष्योक्तमुच्चार्याह-महाव्रतोच्चारणा पञ्चविधा प्रज्ञप्ता प्ररूपिता, प्रथमांतिमजिनयोस्तीर्थे रात्रिभोजनविरमण षष्ठं च। पञ्चविधत्वमुपदर्शयन्नाह—

तं जहा-सव्वाओ पाणाइवायाओ वेरमणं १ । सव्वाओ मुसावायाओ वेरमणं २। सव्वाओ अदिन्नादाणाओ वेरमणं ३। सव्वाओ मेहुणाओ वेरमणं ४। सव्वाओ परिग्गहाओ वेरमणं ५। सव्वाओ राईभोअणाओ वेरमणं ॥ ६ ॥

'तं जहा'—तद्यथेत्युपदर्शनार्थः, सर्वस्मात्सर्वस्वभेदयुक्तादग्रे वक्ष्यमाणस्वरूपात्प्राणातिपाताद्विरमणम्, एवमग्रेऽपि ॥ ६ ॥ एवं सामान्येन व्रतषट्कमुक्त्वा विशेषतस्तत्स्वरूपमाह—

तत्थ खलु पढमे भंते महव्वए पाणाइवायाओ वेरमणं, सव्वं भंते पाणाइवायं पच्चक्खामि, से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणे अइवाएज्जा, नेवन्नेहिं पाणे अइवायाविज्जा, पाणे अइवायंते वि अन्ने

न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि, तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥ ७ ॥

"तच्छत्यादि"—तत्र तेषु षट्सु व्रतेषु मध्ये, खलुशब्दान्मध्यमतीर्थकरप्रणीतेषु चतुर्यामेषु, वाक्यालङ्कारे वा खलुः, प्रथमे सूत्रक्रमप्रामाण्यादाद्ये, भंतेति गुर्वामन्त्रणम्, भदंतः सुखकल्याणहेतुत्वात् भवांतो भयांतो वा तदन्तकरत्वात्, प्राणानामिन्द्रियादीनामतिपातो विनाशो जीवस्य महादुःखोत्पादनम्, न तु जीवनाश एव, तस्माद्विरमणम्, सम्यग् ज्ञानश्रद्धानपूर्वकं सर्वथा निवर्त्तनम् भगवतोक्तमिति शेषः। यतश्चैवमत उपादेयमेतदिति विनिश्चित्य भदंत सर्वं प्राणातिपातं प्रत्याख्यामि वर्जयामीत्यर्थः, अथवा प्रत्याचक्षे संवृतात्मा साम्प्रतमनागतप्रतिषेधस्यादरेणाऽभिधानं करोमीत्यर्थः। अनेन व्रतार्थपरिज्ञानादिगुणयुक्तो व्रतार्ह इत्यावेदयति ॥ से०—से तद्यथार्थे सूक्ष्मं, अत्र सूक्ष्मोऽल्पः परिगृह्यते, न तु सूक्ष्मनामकर्मोदयात्सूक्ष्मस्तस्य कायेन व्यापादानासंभवात्, बादरोऽपि स्थूलो, वाशब्दौ परस्परापेक्षया समुच्चये, स चैकैको द्विधा त्रसः कुन्थ्वादि, स्थावरो वनस्पत्यादिः, बादरस्तु त्रसो गवादिः, स्थावरः पृथिव्यादिः। अत्रापि वाशब्दो समुच्चयार्थौ, एनान् पूर्वोक्तान् नैव स्वयमात्मना प्राणिनो जीवान्, विभक्तिव्यत्ययादतिपातयामि विनाशयामि, नैवान्यैः प्राणिनोऽतिपातयामि, प्राणिनोऽतिपातयतोऽप्यान्यान्न समनुजानामि, नानुमोदयामि, कथमित्याह—जावज्जीवाएत्ति—प्राकृतत्वाज्जीवनं जीवः प्राणधारणं, यावज्जीवो यावज्जीवं, परतस्तु न विधिर्नापि प्रतिषेधः, विधावाशंसादोषप्रसङ्गात्, प्रतिषेधे त्वविरतेषु सुरेषूत्पन्नस्य भङ्गप्रसंगात्, किमित्याह—तिस्रो विधा यस्य प्राणातिपातस्येति गम्यते, असौ त्रिविधस्त्रिविधेन करणेन, एतदेव दर्शयति, मनसा वचसा कायेन च, अस्य च करणस्य कर्म प्राणातिपातः, न करोमि स्वयं न कारयाम्यन्यैः, कुर्वन्तमप्यन्यं नानुजानामि, ननु करणकर्मणोः किं व्यत्ययनिर्देशः कृत, उच्यते, करणायत्ता कृतादिरूपा वर्त्तते, इति दर्शनार्थं, तथाहि-कृतादिरूपा क्रिया मनःप्रभृतिकरणवशैव, करणानां भावे क्रियाया अपि भावात् अभावे चाऽभावात्,

करणानामेव तथा क्रियारूपेण परिणतेरिति भाव., कुर्वन्तं न समनुजानामीति, गतेऽपि, अप्यन्यं इति ग्रहणं साभिप्रायकमनुक्तस्याप्यर्थस्य संग्रहार्थं, यस्मात्संभावनार्थोऽयमुभयपदमध्यस्थेऽपिशब्द एतज्ज्ञापयति, यथा कुर्वन्तं नानुजानाम्येवं कारयन्तमप्यन्यं अनुज्ञापयन्तमप्यन्यं न समनुजानामीति, तथा यथा वर्त्तमानकाले कुर्वन्तमपि नानुजानामि, एवमतीतकाले कृतवन्तमपि कारितवन्तमपि अनुज्ञापितवन्तमपि, एवमनागतकालेऽपि, तथा न क्रियाक्रियावतोर्भेद एव, अतो न केवला क्रिया भवतीति ख्यापनार्थमन्यग्रहणं, तथा तस्य त्रिकालभाविनोऽधिकृतप्राणातिपातस्य सम्बन्धिनमतीतमवयवं, न तु वर्त्तमानमनागतं वा, अतीतस्यैव प्रतिक्रमणात्, भदंत प्रतिक्रमामि, मिथ्यादुष्कृतं तत्र यच्छामीत्यर्थः, प्रतिक्रमणं च द्रव्यतः क्षुल्लककुलालवत्, भावतश्च चंदनबालामृगावतीवज्ज्ञेयम्, तथा निन्दामि, अत्रात्मसाक्षिकी निन्दा, सा च द्रव्यतश्चित्रकदारिकावत्, भाव भावतस्तु साधुवत्, गर्हा परसाक्षिकी, सा च द्रव्यतो मरुकवत्, भावतश्च—"गन्तूण गुरुसगासे । काऊण य अजलिं विणयमूलम् ॥ जह अप्पणो तह परे । जाणवणा एस गरिहत्ति ॥ १ ॥ इति रूपा ॥ आत्मानमतीतप्राणातिपातकारिणं, तथा व्युत्सृजामि, विविधं विशेषेणं वा उद्भृशं त्यजामि, अतीतप्राणातिपातमिति गम्यते, प्रत्युत्पन्नसंवरणमनागतप्रत्याख्यानं च, सव्वं भन्ते पाणाइवायं पच्चक्खामि इत्यादिना कृतमेव, व्युत्सर्गे द्रव्यतो भावतश्च प्रसन्नचन्द्र उदाहरणम्, साम्प्रतम् प्रागुपन्यस्तप्रत्याख्यानेभेदाः प्रदर्श्यन्ते, तत्परिज्ञानोपायश्चायम्—"तिन्नि तिआ तिन्नि दुआ । तिन्निक्किक्का इति जोगेसु ॥ ति दु एगं ति दु एगं । ति दु एगं चेव करणाइं ॥ १ ॥ पढमे लब्भइ एगो । सेसेसु पएसु तिअ तिअ तिअ च ॥ दो नव तिअ दो नवगा । तिगुणिअ सीआलभंगसयं ॥ २ ॥

स्थापना चेयं—

| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ | योगाः |
|---|---|---|---|---|---|---|---|---|---|
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ | करणानि |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ | लब्धम् |

अत्र च योगाः करणादयो व्यापाराः, करणानि च मनोवाक्कायाः, सूक्ष्मं वादरं चेत्यादिना द्रव्यप्राणातिपातोऽभिहित,

अनेन चेकग्रहणाज्जातीयग्रहणमिति न्यायाच्चतुर्विधः प्राणातिपात उपलक्षितः, अतस्तदभिधानायाह—

**से पाणाइवाए चउव्विहे पन्नत्ते। तं जहा—दव्वओ खित्तओ कालओ भावओ। दव्वओ णं पाणाइवाए छसु जीवनिकाएसु। खित्तओ णं पाणाइवाए सव्वलोए। कालओ णं पाणाइवाए दिआ वा राओ वा। भावओ णं पाणाइवाए रागेण वा दोसेण वा ॥ ८ ॥**

'सेत्ति' सः प्राणातिपातः चतुर्विधः प्रज्ञप्तो जिनैरुक्तस्तद्यथा, द्रव्यतः द्रव्यप्राधान्यमाश्रित्य, एवं क्षेत्रमङ्गीकृत्येत्यादि, एतानेव भेदान् व्याचष्टे, द्रव्यत इति व्याख्येयपदपरामर्शः, णमिति सर्वत्र वाक्यालङ्कारे, प्राणातिपातः षट्सु जीवनिकायेषु सूक्ष्मादिभेदभिन्नेसु प्राणिगणेषु सम्भवतीति शेषः, क्षेत्रतः सर्वलोके तिर्यग्लोकादिभेदभिन्ने भुवने, कालतो दिवा रात्रौ वा, भावतो रागेण मांसादिभक्षणाद्यभिप्रायलक्षणेन, द्वेषेण शत्रुहननादिपरिणामस्वरूपेण द्रव्यभावपदसमुत्था चतुर्भङ्गिका चात्र, तद्यथा—द्रव्यतोहिंसा भावतश्च, यथा व्याधेन वधोद्यतेन मृगे हते सति। अन्या द्रव्यतो, न भावतः, इयं चेर्यादिसमितस्य साधोः कारणे गच्छतः स्यात्। एका भावतो न द्रव्यतः, मुक्ते बाणे शिलादिना स्खलिते। न द्रव्यतो न भावतः, अयं तु शून्य। अथ प्राणातिपातस्यैवातीतकालकृतस्य सविशेषनिन्दामाह—

**जं मए इमस्स धम्मस्स केवलिपण्णत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवन्निअस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तस्स कुक्खी-**

सम्मलस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणग्गाहियस्स निव्वियारस्स निव्वित्तिलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइअस्स संसारपारगामिअस्स निव्वाणगमणपज्जवसाण-फलस्स, पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोस-पडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएणं पंचिंदि-ओवसट्टेणं पडुप्पन्नभारियाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु पाणा-इवाओ कओ वा काराविओ वा कीरंतो वा परेहिं समणुन्नाओ तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं ॥ ९ ॥

'जंमए इत्यादितः काएणं इत्यंतम्' अत्र च यो मयाऽस्य धर्मस्य केवलिप्रज्ञप्तादिद्वाविंशतिविशेषणविशेषितस्य पूर्वमज्ञान-तादिभिश्चतुर्भिः प्रमादादिभिश्चैकादशभिः कारणैः प्राणातिपात' कृतस्त निन्दामीत्यादिसम्बन्ध विभक्तिव्यत्ययाद्यं इति यस्मिन् प्राणातिपाते इति योगः, मयाऽस्य धर्मस्य केवलिप्रज्ञप्तस्य, अहिंसा लक्षणं चिन्हं यस्य तदनुमेयसम्भवस्येत्यर्थः, सत्याधिष्ठितस्य, विनयमूलस्य, क्षान्तिः प्रधाना सारभूता यस्य, हिरण्यं रजतम्, सौवर्णिकं स्वर्णमयं कनककलशादि, ते न विद्येते यस्य, तस्य सर्वपरिग्रहरहितस्येत्यर्थ, उपशम इन्द्रियमनोजयस्तस्मात्प्रभवो जन्म यस्य, इन्द्रियमनोनिग्रहलभ्यत्यर्थ', नवसंख्याः गुप्तिशब्दलो-पात् वसतिकथाद्या ब्रह्मचर्यगुप्तयस्ताभिर्गुप्तस्य, न विद्यन्ते पचमाना· पाचका यत्र तस्य अपचमानस्य, पाकक्रियाविनिवृत्तसत्त्वासे-वितस्येत्यर्थः, अत एव भिक्षयाभक्तादे परतो याचनेन वृत्तिर्वर्त्तनं धर्मसाधककायपालनं यत्र। कुक्षावेव बहिःसञ्चयाऽभावाच्छम्बलं पाथेय यत्र। निर्गतमग्नेः शरणं शीतादिपरित्राणं यत्र। अथवा निर्गते स्वीकाराऽभावादग्निशरणे वह्निगृहे यत्र, निर्गतमग्नेः स्मरण

घा यत्र तस्य निरग्निसमरणस्य निरग्निशरणस्य वा। सम्प्रक्षालयति कर्ममलं शोधयतीत्येवंशीलः सम्प्रक्षाली, कप्रत्यये सम्प्रक्षालिकस्य, त्यक्ता दोषा मिथ्यात्वाज्ञानादयो, द्वेषो वा येन। अत एव गुणग्राहकस्य गुणग्रहणशीलस्य, निर्गतो विकारः कामोन्मादरूपो यस्मात्। निवृत्तिलक्षणस्य सर्वसावद्ययोगोपरमस्वभावस्य। पञ्चमहाव्रतयुक्तस्य अहिंसालक्षणस्येत्यादिना सिद्धेऽपि पुनर्महाव्रतग्रहणं प्राधान्यख्यापनार्थं, अनुक्तादत्तादानरूपमहाव्रतसंग्रहार्थं च। न विद्यते संनिधौ मोदकोदकादे प्रत्युषितस्य संचयो धारणं यत्रासावसंनिधिसञ्चयस्तस्य। अविसंवादिन दृष्टेष्टाऽविरोधनः, पाठांतरे अविसंवादिस्य वाऽसद्भूतप्रमाणाऽबाधितस्य। संसारपार गमयति, तदारूढप्राणिनः पोतवत्पारं प्रापयतीति संसारपारगामिकस्य निर्वाणगमनं, पर्यवसाने आनुषङ्गीकसुरमनुजसुखानुभवपर्यन्ते फलं कार्यं, यस्य तस्य, एवं विधस्य धर्मस्य पूर्वं प्रतिपत्तिकालात्प्राग् अज्ञानतयाऽनवगमेन तथा अश्रवणतया प्रज्ञापकमुखादनाकर्णनेन अथवा श्रवणेऽप्यबोध्याऽबोधेन, यथावत् धर्मस्वरूपाऽपरिज्ञानेन। अथवा व्यवहारत श्रवणावगमसद्भावेऽपि अनभिगमेन सम्यगप्रतिपत्त्या। अथवा अभिगमेन वेति विभक्तिव्यत्ययादभिगमे वा सम्यग् धर्मप्रतिपत्तौ वा, प्रमादेन मद्यविषयादिलक्षणेन। रागद्वेषप्रतिषेधतया तदाकुलतयेत्यर्थ। बालतया शीशुतया अगण्डिततया वा, मोहतया विचित्ततया मोहनीयकर्मायत्ततया वा। मन्दतया कायजडतया, अलसतयेत्यर्थः। क्रीडतया केलीकिलतया द्युतादिक्रीडनपरतयेत्यर्थः। त्रिगौरवगुरुकतया। चतुःकषायोपगतेन क्रोधाद्युदयवशगमनेनेत्यर्थः। पञ्चानामिन्द्रियाणां उप सामीप्येन वश आयत्तता, वर्णलोपात्पञ्चेन्द्रियोपवशस्तेन यदार्त्तमार्त्तध्यानं विह्वलतेत्यर्थः, पञ्चेन्द्रियोपवशार्त्त तेन। प्रत्युत्पन्नं वर्त्तमानमुत्पन्नं वोच्यते, प्रत्युत्पन्नश्चासौ भारश्च कर्मणामिति गम्यते, स विद्यते यस्यासौ प्रत्युत्पन्नभारी तस्य भावो भारिता तया कर्मगुरुतयेत्यर्थ, पाठांतरे प्रतिपूर्णभारितया वा। सातात्सातवेदनीयकर्मणः सकाशात्सुखं सातसुखं अनुपालयताऽनुभवता सुखासक्तमनसेत्यर्थः। पाठांतरे सदा सुखमनुपालतेति व्यक्तम्। 'इहं वत्ति' बिन्दुलोपादिह वाऽस्मिन्ननुभूयमाने भवे नृजन्मनि, अन्येषु वा भवग्रहणेषु जन्मोपादानेषु, प्राणातिपात० इत्यादि स्पष्टं, साम्प्रतं त्रैकालिकप्राणातिपातविरतिं प्रतिपादयन्नाह—

अईअं निंदामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामि सव्वं पाणाइवायं ॥ १० ॥

'अइयंत्ति', अतीतं निन्दामि। प्रत्युत्पन्नं वर्त्तमानकालभाविनं संवृणोमि, भवंतं धारयामीत्यर्थः अनागतं प्रत्याख्यामि सर्वं प्राणातिपातं। अनागतप्रत्याख्यानं विशेषयन्नाह—

जावज्जीवाए अणिस्सिओहं नेव सयं पाणे अइवाएज्जा नेवन्नेहिं पाणे अइवायावेज्जा पाणे अइवायंते वि अन्ने न समणुजाणिज्जा(णामि) ॥ ११ ॥

'जावज्जीवेत्ति' यावज्जीवं तनिश्रितोऽहं, इहपरलोकाशंसाविप्रमुक्तोऽहं, ममातो व्रतानुपालनात् किञ्चिदमरसुखं मनुजसुखं वा भूयादित्याकाङ्क्षारहित इत्यर्थः नैवस्वयं०' इत्यादि स्पष्टं, कतिसाक्षिकमिदं प्रत्याख्यानमित्याह—

तं जहा–अरिहंतसक्खिअं सिद्धसक्खिअं साहुसक्खिअं देवसक्खिअं अप्पसक्खिअं ॥ १२ ॥

तं जहा, तद्यथा, अर्हन्तः साक्षिणः समक्षभाववर्तिनो यत्र तत् 'शेषाद्वा' इति कप्रत्ययेऽर्हत्साक्षिकं, एवमग्रेऽपि, क्रियाविशेषणानि चैतानि, ननूभयप्रत्यक्षभावे लोके सक्षिकव्यवहारो रूढः, न चात्र प्रत्याख्यातुः सिद्धा प्रत्यक्षाः, अतीन्द्रियत्वात्तेषां तत्कथं ते तस्य साक्षिणः ? उच्यते, श्रुतवासितमतेस्तत्स्वरूपज्ञस्य ते भावकल्पनया प्रत्यक्षा इवेति कथं न साक्षिणः ? इति, देवाः जिनालयाद्यधिष्ठायिनः, तिर्यग्लोकसञ्चरिष्णवो वा, विरतिप्रतिपत्तिक्रमभाविनश्चैत्यवन्दनाद्युपचारात्समीपमागताः, स्वस्थानस्था वा कथञ्चिद् द्वीपसमुद्रान् प्रति प्रयुक्तावधय साक्षिणो यत्र तद् देवसाक्षिकं एवं च कृते यत्संपद्यते तदाह—

एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा ॥ १३ ॥

एवमिति प्रागुक्तप्रत्याख्याने सम्पन्ने सति भवति भिक्षुर्वा भिक्षुक्यपि, पुरुषोत्तमो धर्म इत्यतो भिक्षुविशेषणान्येतानि भिक्षुक्या अपि दृष्ट्व्यानीत्याहः संयत सप्तदशभेदसंयमोपेतस्तथा विविधे द्वादशविधे तपसि रतो विरतः (ततः कर्मधारय)। प्रतिहतं स्थितिह्रासतः, प्रत्याख्यातं हेत्वभावतः, पुनर्वृद्ध्यभावेन निराकृतं पापमशुभं कर्म ज्ञानावरणीयादि येन स तथा, तत पुनः पूर्वपदेन कर्मधारये संयतविरतप्रतिहतप्रत्याख्यातपापकर्मा, एकको वा कारणिकावस्थायामसहायो वा, शेषं स्पष्टम्, प्राणातिपातविरतिमेव स्तुवन्नाह—

एस खलु पाणाइवायस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं सव्वेसिं भूआणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरिआवणयाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खयाए बोहिलाभाए संसारुत्तारणाए त्ति कट्टु उवसंपज्जित्ताणं विहरामि ॥ १४ ॥

'एसत्ति' लिङ्गव्यत्ययादिदं खलु निश्चयेन विभक्तिव्यत्ययात्प्राणातिपाताद्विरमणं, हितं कल्याणकारित्वात् पथ्यभोजनवत्।

सुखं, तद्धेतुत्वात् पिपासितशितजलपानवत्। क्षमं युक्तमुचितमिति यावत्। निःश्रेयसिकं, प्राकृतत्वेन यलोपान्निःश्रेयसो मोक्षस्तद्धेतुत्वान्निःश्रेयसम्, तदेव निःश्रेयसिकम्। आनुगामिकं भवपरंपरानुगामिसुखजनकम्। कथमिदमेवंविधमित्याह–सर्वेषां प्राणा दशविधा विद्यन्ते, येषां ते, अभ्रादित्वान्मत्वर्थितेऽप्रत्यये प्राणाः पञ्चेद्रियास्तेषां सर्वेषां भूतानां पृथिव्यादीनां वनान्तानां त्रैकालिकसत्तान्वितानां, निरुपक्रमजीवितेन जीवन्तीति जीवा देवाद्यास्तेषां लोकोपकारमात्रहेतुसत्वोपेतत्वात् सत्त्वाः, सोपक्रमायुषस्तिर्यङ्मनुष्याद्यास्तेषां, क्वाप्यमीषामन्योऽन्यमेवं विशेषो दृश्यते–"प्राणा द्वित्रिचतुः प्रोक्ता। भूतास्तु तरवः स्मृताः ॥ जीवाः पञ्चेन्द्रिया ज्ञेयाः। शेषाः सत्त्वा इतिरिता" ॥ १ ॥ एकार्थिकानि चैतान्यत्यादररक्षणीयताख्यापनार्थं च नानादेशजविनेयानुग्रहाय च प्रयुक्तानि। एतेषामदुःखनतया अदुःखोत्पादनेन मानसिकाऽसातानुदीरणेनेत्यर्थः। अशोचनतया शोकाऽनुत्पादनेन। अजूरणतया शरीरजीर्णत्वाऽविधानेन, दृश्यन्ते चारम्भिणो जना वृषभादीनामारप्रहाराहारनिरोधादिभि शरीराणि जूरयन्तः, अतस्तदकरणेनेति। अतेपनतया स्वेदलालाश्रुजलक्षरणकारणवर्जनेन। अपीडनतया पादाद्यघट्टनेन। अपरितापनतया समन्ताद्देहसन्तापपरिहारतः। अनद्रावणतया उत्त्रासनाऽकरणेन मारणपरिहारण वा। किञ्चेदं प्राणातिपातविरमणपदं महार्थं महानर्थः फलस्वरूपाद्यभिधेयं यस्य तत्। महागुणः सकलगुणाधारत्वान्महाव्रतानाम्। महानुभावः स्वर्गापवर्गादिप्रदानलक्षणं माहात्म्य यस्य तत्। महापुरुषैस्तीर्थकराद्यैरनुचीर्णं पुनः पुनरासेवितम्। परमर्षिभिस्तैरेव देशितं भव्योपकाराय कथितम्। प्रशस्तं सकलकल्याणकारणत्वात् यतश्चैवमतस्तत्प्राणातिपातविरमणं दुःखक्षयाद्यर्थं मे भविष्यतीति गम्यत इति कृत्वेति हेतोरुपसंपद्यते, तत्सामस्त्येनाङ्गीकृत्य विहरामि मासकल्पादिना सुसाधुविहारेणाऽन्यथा व्रतप्रतिपत्तेर्वैयर्थ्यप्रसंगात्। अथ व्रतप्रतिपत्तिं निगमयन्नाह—

पढमे भंते महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ वेरमणं ॥ १ ॥ ॥ १९ ॥

पद० प्रथमे भदन्त महाव्रते उप सामीप्येन तत्परिणामात्प्रेत्यर्थं, स्थितो व्यवस्थितोऽस्म्यहं ततश्च इत आरभ्य मम सर्वस्मात् प्राणातिपाताद्विमरणं निवृत्तिरिति। अत्र च भदंतेति गुर्वामन्त्रणेनादिमध्यान्तोपन्यस्तेन गुरुमनापृच्छ्य न किञ्चित् कार्यं कृतं च तस्मै श्लाघ्यमेवं तदाराधितं स्यादित्येतदाह—दोषाश्चेह प्राणातिपातिनां नरकगमनाल्पायुर्बहुरोगित्वकुरूपादयो वाच्याः। इत्युक्तं प्रथमं महाव्रतम्। इदानीं द्वितीयमाह—

अहावरे दोचे भंते महव्वए मुसावायाओ वेरमणं। सव्वं भंते मुसावायं पच्चक्खामि। से कोहा वा लोहा वा भया वा हासा वा। नेव सयं मुसं वएज्जा नेवन्नेहिं मुसं वायावेज्जा मुसं वयन्ते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि॥

॥ अहा० अथेति प्रथममहाव्रतानन्तरेऽपरस्मिन् महाव्रते मृषावादाद्विरमणं भगवतो ममेति वाक्यशेषः, स च मृषावादश्चतुर्धा, सद्भावप्रतिषेधो नास्त्यात्मा पुण्यं पाप चेत्यादि (१) असद्भावोद्भावनं, श्यामाकतन्दुलमात्र आत्मा ललाटस्थो हृदयदेशस्थ सर्वगतो वेत्यादि (२) अर्थान्तराभिधानं गामश्वं ब्रुवाणस्यत्यादि (३) गर्हावचनं काणं काणमेव वदति, अकाणमपि वा काणमाहेत्यादि, अथवा परलोकमाश्रित्य गर्हार्ह वचनं गर्हावचनं, तच्च दम्यन्तां बलीवर्दादयः, प्रदीयतां कन्या वरायेत्यादि (४) यतश्चैवमत, सर्वं भदंत मृषावादं प्रत्याख्यामि। सेत्ति तद्यथा क्रोधाद्वा लोभाद्वा, आद्यन्तग्रहणाच्च मानमायापरिग्रह, हास्याद्वा अनेन प्रेमद्वेषकलहाभ्याख्यानादिग्रहः, वा शब्दाः समुच्चये, नैव स्वयं मृषा वदामि, नैवान्यैर्मृषा वादयामि, वदतोऽप्यन्यान्न समनुजानामि, शेषं स्पष्टं॥ चतुर्विधमृषावादमाह—

से मुसावाए चउव्विहे पन्नत्ते। तं जहा-दव्वओ १ खित्तओ २ कालओ ३ भावओ ४। दव्वओ णं मुसावाए सव्वदव्वेसु। खित्तओ णं मुसावाए लोए वा अलोए वा। कालओ णं मुसावाए दिआ वा राओ वा। भावओ णं मुसावाए रागेण वा दोसेण वा ॥ १७ ॥

से मृ० द्रव्यतो मृषावाद सर्वद्रव्येषु धर्माधर्मादिसमस्तपदार्थेषु अन्यथा प्ररूपणतः, क्षेत्रतो लोके वा लोकविषये, अलोके वा अलोकविषये, कालतो० भावतो रागेण वा मायालोभलक्षणेन, तत्र मायया अग्लानोऽपि ग्लानोऽहमिति वक्ति, लोभेन तु शुभाशलाभे प्रान्तस्यैषणीयत्वेऽप्यनेषणीयमिति ब्रूते, द्वेषेण वा क्रोधमानलक्षणेन, तत्र क्रोधेन त्वं दास इत्यादि, मानेन तु अबहुश्रुतोऽपि बहुश्रुतोऽहमिति वक्ति, उपलक्षण चेदं भयहास्यादीनाम्, तत्र भयात् किञ्चिद् वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि भाषते, एवं हास्यादिष्वपि, द्रव्यभावाभ्यां चतुर्भङ्गी चात्र, तद्यथा-तत्राद्यो द्रव्यतोऽप्यभावतः, यथा व्याधेन मृगेषु पृष्टेषु दृष्टानपि मृगान् दयया न दृष्टा इति ब्रूते ॥ १ ॥ अन्यो भावतो न द्रव्यतो, यथा मृषा भणामीति परिणतः सहसा सत्यं ब्रूते ॥ २ ॥ तृतीयो द्रव्यतो भावतश्चेति, यथा मृषा भणामीति परिणतस्तामेव वदति ॥ ३ ॥ चतुर्थः शून्यः ॥ ४ ॥

जं मए इमस्स धम्मस्स केवलिपण्णत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवन्नियस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणग्गाहियस्स निव्वियारस्स निव्वित्तिलक्खणस्स

पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइअस्स संसारपारगामिअस्स निव्वाणगमणपज्जवसाण-फलस्स पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएणं पंचिंदिओवसट्टेणं पडुप्पन्नभारियाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु मुसावाओ भासिओ वा भासाविओ वा भासिज्जंतो वा परेहिं समणुन्नाओ तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अईअं निंदामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामि सव्वं मुसावायं जावज्जीवाए अणिस्सिओहं नेव सयं मुसं वएज्जा नेवन्नेहिं मुसं वायावेज्जा मुसं वयंते वि अन्ने न समणुजाणिज्जा (णामि)। तं जहा–अरिहंतसक्खिअं सिद्धसक्खिअं साहुसक्खिअं देवसक्खिअं अप्पसक्खिअं एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु मुसावायस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं सव्वेसिं भूआणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोअणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरिआवणयाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खयाए बोहिलाभाए

संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि । दोच्चे भंते महव्वए उवट्ठिओमि सव्वाओ मुसा-वायाओ वेरमणं ॥ २ ॥

शेषं स्पष्टं, न वरमिह दोषा मृषाभाषिणां जिह्वाछेदाविश्वासमूकत्वादयो वाच्याः ॥ साम्प्रतं तृतीयव्रतमाह—

अहावरे तच्चे भंते महव्वए अदिन्नादाणाओ वेरमणं । सव्वं भंते अदिन्नादाणं पच्चक्खामि । से गामे वा नगरे वा अरण्णे वा अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं अदिन्नं गिण्हिज्जा नेवन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं गिण्हंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणु-जाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥

अहा० से गामे वा, नगरे वा अरण्ण वा, अनेन क्षेत्रपरिग्रहः, अल्पमूल्यत एरण्डकाष्ठादि, बहुमूल्यत एव वज्रादि, अणु प्रमाणतो वज्रादि, स्थूलं काष्ठादि, एतच्च चित्तवद् वा सचेतनम्, अचित्तवद् वा अचेतनम्, नेवस्व० अत्र से गामेवेत्यादिना क्षेत्रतः, अप्पं वेत्यादिना तु द्रव्यतोऽदत्तादानमुक्तमनेन चतुर्विधाऽदत्तादानमुपलक्षितमित्यतस्तदऽभिधानायाह—

से अदिन्नादाणे चउव्विहे पन्नते । तं जहा—दव्वओ खित्तओ कालओ भावओ । दव्वओ णं

आदिन्नादाणे गहणधारणिज्जेसु दव्वेसु, खित्तओ णं अदिन्नादाणे गामे वा नगरे वा अरण्णे वा, कालओ णं अदिन्नादाणे दिआ वा राओ वा, भावओ णं अदिन्नादाणे रागेण वा दोसेण वा।

सेअ० द्रव्यतो ग्रहणधारणीयेषु द्रव्येषु, गृह्यन्ते इति गृहणान्युपादानार्हाणि, धार्यन्ते इति धारणीयानि, तेषु द्रव्येष्वनेन च धर्माऽधर्मास्तिकायादिष्वदत्तादानप्रतिषेधमाह—गृहणधारणाऽनर्हत्वात्तेषामत एव न सर्वद्रव्यविषयमिदं व्रतं यदाह—'पढमम्मि सव्व जीवा' बीए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदेवमदेसेण दव्वाणं ॥" ॥ १ ॥ क्षेत्रतो ग्रा०, भावतो रागेण वा मायालोभरूपेण द्वेषेण वा क्रोधमानस्वरूपेण, तत्र मायया धूर्त्तानाम्, लोभेन वणिग्चौरादीनाम्, क्रोधेन नृपादीनाम्, मानेन साभिमाननराणामदत्तादानसम्भवो भाव्यः, मायादिष्वपि लोभसद्भावो ज्ञेयो, न हि तदभावाददत्तादान स्यादिति, द्रव्यादिचतुर्भङ्गी पुनरियम्, द्रव्यतोऽदत्तादानं नो भावतोऽरक्तद्विष्टसाधोः कथञ्चिदननुज्ञाप्य तृणादि गृह्णतः ॥ १ ॥ भावतो न द्रव्यतः हरामीति-कृताध्यवसायस्य तदऽसम्पत्त्या ॥ २ ॥ द्रव्यतो भावतश्च सम्पत्त्या ॥ ३ ॥ चतुर्थः शून्यः ॥ ४ ॥

जं मए इमस्स धम्मस केवलिपन्नत्तस्स अहिंस्सालक्खणस्स सच्चाहिट्ठिअस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवण्णियस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिसरणस्स संपक्खालिअस्स चत्तदोसस्स गुणग्गाहिअस्स निव्विआरस्स निव्वित्तिलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइयस्स संसारपारगामिअस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेण अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंद-

याए किड्डयाए तिगारवगरुआए चउक्कसाओवगएणं पचिंदिओवसट्टेणं पडुप्पण्णभारियाए सायासुक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु अदिन्नादाणं गहिअं वा गाहाविअं वा घिप्पंतं वा परेहिं समणुन्नायं तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अईअं निंदामि पडुप्पन्नं संवरेमि अणागयं पचक्खामि सव्वं अदिन्नादाणं जावज्जीवाए अणिस्सिओ हं नेव सयं अदिन्नं गिण्हिज्जा नेवन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं गिण्हंते वि अन्ने न समणुजाणिज्जा (णामि)। तं जहा—अरिहंतसक्खिअं सिद्धसक्खिअं साहुसक्खिअं देवसक्खिअं अप्पसक्खिअं एवं हवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपचक्खायपावकम्मे दिआ वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु अदिन्नादाणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं सव्वेसिं भूआणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोअणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरिआवणयाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मुक्खयाए बोहिलाभाए संसारुत्तारणाए त्ति कट्टु उवसंपज्जित्ताणं विहरामि। तच्चे भंते महव्वए उवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं ॥ ३ ॥

शेष प्राग्वत् ॥ अधुना चतुर्थमाह—

अहावरे चउत्थे भंते महव्वए मेहुणाओ वेरमणं। सव्वं भंते मेहुणं पचक्खामि। से दिव्वं वा माणुसं

वा तिरिक्खजोणिअं वा । नेवं सयं मेहुणं सेविज्ञा नेवन्नेहिं मेहुणं सेवाविज्ञा मेहुणं सेवंतेवि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥

अहा० देवानामिदं दैवं अप्सरामरसम्बन्धि, मनुष्याणामिद मानुषम्, नरनारीसत्कम्, तिर्यग्योनौ भवं तैर्यग्योनम्, वडवाश्वादिजम् दैवं वेत्यादिना द्रव्यमैथुनेन चतुर्थमैथुनमुपलक्षितमतस्तदाह—

से मेहुणे चउव्विहे पन्नत्ते । तं जहा–दव्वओ खित्तओ कालओ भावओ । दव्वओ णं मेहुणे रूवेसु वा रूवसहगएसु वा । खित्तओ णं मेहुणे उड्ढलोए वा अहोलोए वा तिरियलोए वा । कालओ णं मेहुणे दिआ वा रओ वा । भावओ णं मेहुणे रागेण वा दोसेण वा ।

सेमे० द्रव्यतो मैथुनं रूपेषु वा रूपसहगतेषु वा द्रव्येषु तत्र रूपाणि निर्जीवाणि प्रतिमारूपाण्युच्यन्ते, रूपसहगतानि तु सजीवनराङ्गनादेहा', यद्वा भूषणविकलानि रूपाणि, भूषणसहितानि तु रूपसहगतानि, क्षेत्रत ऊर्ध्वलोके, मेरुवनसौधर्मेशानादिषु सम्भवति, अधो० अधोग्रामभवनपतिभवनाब्दिषु तिर्य० द्वीपाब्धिगिर्यादिषु, भावतो रागेण मायालोभलक्षणेन, द्वेषेण क्रोधमानरूपेण, तत्र मायया यथैकः साधु कस्याञ्चिदागारिण्यां प्रणयी, तत्सम्भोगमलभमानो मायया गुरुमाह, यथा दुष्यति ममोदरं, ततोऽनुजानीतासन्नगृहे यथा प्रवृत्ताग्निना परितापयामि, ततस्तां प्रतिसेव्यागत इति ( १ ) लोभेन तु प्रोषितपतिकामोदकसुखभोगादिलोभितारहन्नवक्षुल्लवत् ( २ ) एकः साधुरटव्यां परिव्राजिकां दृष्ट्वा एषा शासनप्रत्यनीकेति प्रद्विष्टचित्तस्तस्या व्रतभंगमकार्षीदिति कोपोदाहरणं ( ३ ) मानेन तु एकस्तरुणः श्रमणो मनोहराकृतिस्तं दृष्ट्वा एका स्त्री अध्युपपन्ना, चिन्तयति अहो

स्नानादिविभूषणैर्विनाप्यस्य साधोः कीदृशी रूपश्रीरिति, ततस्सा तं बहुशोऽभिलपितवती, स च नाभिलपति, ततोऽन्यदा तया भणितं स्फुटं त्वं नपुंसकोऽसि, यो दृढानुरक्तामपि मां न मानयसि, ततः साधुना सञ्जाताहङ्कारेण सा दृढमासेविता (४) अत्रापि चतुर्भङ्गी, राजकन्यिकायाः स्त्रियो बलात्कारेण परिभुज्यमानाया द्रव्यतो न भावतः (१) मैथुनसंज्ञापरिणतायास्तदऽप्राप्तौ न द्रव्यतो भावतः ( २ ) एवं समुपत्या द्रव्यतो भावतश्च ( ३ ) तुर्यः शून्य ( ४ ) दोषाश्चेहाऽब्रह्मसेविनां वधबन्धनाऽयशःकीर्तिषण्डकत्व [illegible] ज्ञेया ॥ पञ्चमहाव्रतमाह—

जं मए इमस्स धम्मस्स केवलिपण्णत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठिअस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवण्णिअस्स उवसमपभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिअस्स कुक्खीसंबलस्स निरग्गीसरणस्स संपक्खालिअस्स चत्तदोसस्स गुणग्गाहिअस्स निव्विआरस्स निव्वित्तिलक्खणस्स पंचमहव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइअस्स संसारपारगामिअस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेण अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुआए चउक्कसाओवगएणं पंचिंदिओवसट्टेणं पडुप्पण्णभारियाए सायासुक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु मेहुणं सेविअं वा सेवाविअं वा सेविज्जंतं वा परेहिं समणुन्नायं तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं, अईयं निंदामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामि, सव्वं मेहुणं जावज्जीवाए अणिस्सिओहं नेव सयं मेहुणं सेविज्जा नेवन्नेहिं मेहुणं सेवाविज्जा मेहुणं

सेवंते वि अन्ने न समणुजाणामि, तं जहा—अरिहंतसक्खियं, सिद्धसक्खियं, साहुसक्खियं, देवसक्खियं, अप्पसक्खियं, एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु मेहुणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणियाए अणोद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि। चउत्थे भंते महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं

दोषाश्चेहाऽब्रह्मसेविनां वधबन्धनाऽयशःकीर्त्ति पण्डकत्ववन्ध्यावैधव्यादयो वाच्याः। पञ्चमं महाव्रतमाह—

अहावरे पंचमे भंते महव्वए परिग्गहाओ वेरमणं, सव्वं भंते परिग्गहं पच्चक्खामि, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा, नेव सयं परिग्गहं परिगिण्हेज्जा नवन्नेहिं परिग्गहं परिगिण्हाविज्जा परिग्गहं परिगिण्हंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि

अहा०—अत्रालं वेत्यादिना द्रव्यपरिग्रहेण चतुर्विधपरिग्रह उपलक्षित इत्यनन्तदभिधानायाह—

से परिग्गहे चउव्विहे पन्नत्ते तं जहा दव्वओ खित्तओ कालओ भावओ, दव्वओ णं परिग्गहे सच्चित्ताचित्त-मीसेसु दव्वेसु, खित्तओ णं परिग्गहे (सव्वलोए) लोए वा अलोए वा, कालओ णं परिग्गहे दिया वा राओ वा, भावओ णं परिग्गहे अप्पग्घे वा, महग्घे वा रागेण वा दोसेण वा ॥

से परि० द्रव्यत सर्वद्रव्येषु आकाशादिसर्वपदार्थेषु, यदुदाजहार-चूर्णिकार.—गामनगराइ पएसेसु ममीकारकरणाओ आगासपरिग्गहो १। न कमणपएसममी० धम्मदव्वपरिग्गहो २। ठाणनिसीअणतुअट्टणपएसममी०-अधम्मपरिग्गहो ३। मायापिइ-माइएसु जीवेसुममी० जीवदव्वओ परि० ४। हिरण्णसुवण्णाइएसु दव्वेसुममी० पुग्गलदव्वपरि० ५। सीउण्हवरिसकालेसु रिउक्कमे वा अन्नयरमुच्छियस्स कालपरिग्गहोत्ति ६। क्षेत्रतो लोके वा अलोके वा, लोकाऽलोकाकाशममत्वकरणादिति भाव । 'सव्वलोएत्ति' क्वचि-त्पाठ., सर्वत्रार्थ. ग्रन्थान्तरे. सह संवादात् । कालतो दिवा० दिनरात्र्यभिलापादित्यर्थ., भावतोऽल्पार्थेऽल्पमूल्ये महार्थे बहुमूल्ये द्रव्ये इत्यादि चतुर्भङ्गी पुनरपि अरक्तद्विष्टस्य धर्मोऽपकरण द्रव्यत परिग्रहो, न भावत १ मूर्च्छितस्य तदसम्पत्त्या भावतो न द्रव्यत २ सम्पत्त्या द्रव्यतो भावतश्च ३ तुर्य. शून्य ४ ॥

जं मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहा-णस्स अहिरण्णसोवण्णियस्स उवसमप्पभवस्स नववंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंब-लस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणगाहिस्स निव्वियारस्स निवित्तिलक्खणस्स पंचम-हव्वयजुत्तस्स असंनिहिसंचयस्स अविसंवाइयस्स संसारपारगामिस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं

अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएणं पंचिंदियओवसट्टेणं पडुप्पन्नभारियाए साय-सोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु परिग्गहो गहिओ वा गाहविओ वा घिप्पंतो वा परेहिं समणुन्नाओ तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अईयं निंदामि पडुपन्न संवरेमि अणागयं पच्चक्खामि सव्वं परिग्गहं जावज्जीवाए अणिस्सिओहं नेव सयं परिग्गहं परिगिण्हेज्जा नेवन्नेहिं परिग्गहं परिगिण्हावेज्जा परिग्गहं परिगिण्हते वि अन्ने न समणुजाणामि, तंजहा–अरिहंतसक्खियं, सिद्धसक्खिय, साहुसक्खियं, देवसक्खियं, अप्पसक्खियं, एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरय-पडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु परिग्गहस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं, सव्वेसिं भूयाणं, सव्वेसिं जीवाणं, सव्वेसिं सत्ताणं, अदुक्खणयाए, असोयणयाए, अजूरणयाए, अतिप्पणयाए, अपीडणयाए, अपरियावणयाए, अणोद्दवणयाए; महत्थे महागुणे महाणुभावे महापुरिसाणुचिण्णे परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु, उवसंपज्जित्ताणं विहारमि। पञ्चमे भंते महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं।

सूत्रं ॥

दोषाश्चेह परिग्रहिणां वधबन्धननरकगमनादयोवाच्याः ॥ षष्ठं व्रतमाह—

अहावरे छट्ठे भंते वए राईभोयणाओ वेरमणं, सव्वं भंते राईभोयणं पच्चक्खामि, से असणं वा, पाणं वा, खाइमं वा, साइमं वा, नेव सयं राइं भुंजेज्जा नेवन्नेहिं राइं भुंजावेज्जा राइं भुंजंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।

अहा०-रात्रिभोजनात्, रात्रौ गृह्णाति रात्रौ भुङ्क्ते १। रात्रौ गृह्णाति दिवा भुङ्क्ते २। दिवा गृ० रात्रौ भु० ३। दिवा गृ० दिवा भु० सन्निधिपरिभोगे ४। इत्येवंविधभङ्गचतुष्कस्वरूपाद्विरमणं भगवतोक्तं, अशनमोदनादि, पानं मृद्विकापानादि, खाद्यं खर्जूरादि, स्वाद्यं ताम्बूलादि, अशनं वेत्यादिना द्रव्यरात्रिभोजनेन चतुर्विध तदुपलक्षितमित्यतस्तदभिधानायाह—

से राईभोयणे चउव्विहे पन्नत्ते तंजहा—दव्वओ, खित्तओ, कालओ, भावओ। दव्वओ णं राईभोयणे, असणे वा, पाणे वा, खाइमे वा, साइमे वा, खित्तओ णं, राइभोयणे—सयखित्ते, कालओ णं राईभोयणे—दिया वा राओ वा, भावओ णं राईभोयणे, तित्ते वा, कडुए वा, कसाए वा, अंबिले वा, महुरे वा, लवणे वा, रागेण वा, दोसेण वा ।

से रा० द्रव्यतो रात्रिभोजनं अशनादौ १। क्षेत्रतः समयेन कालविशेषेणोपलक्षितं क्षेत्रं समयक्षेत्रं, अर्द्धतृतीयद्वीपसमुद्रलक्षणं तस्मिन, न परतो मनुष्यलोकप्रसिद्धदिनरात्र्यभावात् २। कालतो दिवा सन्निधिपरिभोगे ३। भावतः तिक्ते चिर्मिटिकादौ, कटुके

आर्द्रकतेमनादौ, कषाये वल्लादौ, अम्ले तक्रारनालादौ, मधुरे क्षीरदध्यादौ, लवणे प्रकृतिक्षारे तथाविधजलशाकादौ, लवणोत्कटे वाऽन्यस्मिन् द्रव्ये। द्रव्यादिचतुर्भङ्गी पुनरियं, तत्रानुद्गत इति, अस्तमिते सूर्येऽनस्तमित इति मत्वाऽरक्तद्विष्टस्य कारणे रात्रौ भुञ्जन्तो-द्रव्यतो, नो भावतः १। रात्रौ भुञ्जामीति मूर्च्छितस्य तदसंपत्त्या भावतो, न द्रव्यतः २। संपत्त्या द्रव्यतो भावतश्च ३। तूर्यः शून्यः ४।

जं मए इमस्स धम्मस्स केवलिपण्णत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिप्पहाणस्स अहिरण्णसोवन्नियस्स उवसमप्पभवस्स नवबंभचेरगुत्तस्स अपयमाणस्स भिक्खावित्तिस्स कुक्खीसंबलस्स निरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणगाहियस्स निव्वियारस्स निवित्तिलक्खणस्स पंचमहव्वयजुत्त-स्स असंनिहिसंचयस्स अविसंवाइयस्स संसारपारगामिअस्स निव्वाणगमणपज्जवसाणफलस्स पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अभिगमेण वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवगरुयाए चउक्कसाओवगएणं पंचिंदिओवसट्टेणं पडुप्पन्नभारियाए सायासोक्खमणुपालयंतेणं इहं वा भवे अन्नेसु वा भवग्गहणेसु राईभोयणं भुंजियं वा भुंजाविग्रं वा भुंजन्तं वा परेहिं समणुन्नायं तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए काएणं अइअं निंदामि पडुप्पन्नं संवरेमि अणागयं पच्च-क्खामि सव्वं राइभोयणं जावज्जीवाए अणिस्सिओहं नेव सयं राइं भुंजेज्जा नेवन्नेहिं राइं भुंजावेज्जा राइं भुंजंते वि अन्ने न समणुजाणामि, तं जहा–अरिहंतसक्खियं, सिद्धसक्खियं, साहुसक्खियं, देवसक्खियं,

अप्पसक्खियं, एवं भवइ भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा एस खलु राईभोयणस्स वेरमणे हिए सुहे खमे निस्सेसिए आणुगामिए (पारगामिए) सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरणयाए अतिप्पणयाए अपीडणयाए अपरियावणियाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणुचिन्ने परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए मोक्खाए बोहिलाभाए संसारुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि। छट्ठे भंते वए उवट्ठिओम्हि सव्वाओ राईभोयणाओ वेरमणं

इदं च आद्यान्तजिनयोः ऋजुजडवक्रजडपुरुपापेक्षया मूलगुणत्वख्यापनार्थं महाव्रतोपरि पठितं, मध्यमानां तु ऋजुप्राज्ञपुरुपापेक्षयोत्तरगुणेषु, दोपाश्चेह पिपीलिकाशलभादिसत्त्वविनाशादयो वाच्याः ॥ अथ समस्तव्रताभ्युपगमख्यापनायाह—

इच्चेइआइं पंचमहव्वयाइं राईभोअणवेरमणछट्ठाइं अत्तहिअट्ठाए उवसंपज्जित्ताणं विहरामि ॥

इच्चे० इत्येतान्यनन्तरोक्तानि[1] पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि, आत्मनो हितो मोक्षस्तदर्थं आत्महितार्थाय उपसंपद्याङ्गीकृत्य विहरामि साधुविहारेण वर्त्तेऽहं, तदभावेऽङ्गीकृतानामपि व्रतानामभावप्रसङ्गादिति । कृता महाव्रतोच्चारणा. संप्रति तेषामेव यथाक्रममतिचारानाह—

१ उक्तानि ।

सूत्रं ॥

अप्पसत्था य जे जोगा, परिणामा य दारुणा। पाणाइवायस्स वेरमणे, एस वुत्ते अइक्कमे ॥ १ ॥

अप्प०, अप्रशस्ता हिंसाहेतुत्वादसुन्दरा ये केचन योगाश्चङ्क्रमणादयो व्यापाराः, परिणामाश्च भूतघाताद्यध्यवसायाश्च इह पूर्वत्र च पूर्वोत्तरपदापेक्षया समुच्चये, दारुणा रौद्राः। प्राणातिपातस्य विरमणे निवृत्तौ एष उक्तो भगवद्भिः प्रतिपादितोऽतिक्रमोऽतिचार इति मत्वा तान् परिहरेदितिभाव [1]एवमुत्तरत्रापि भावना कार्या ॥ १ ॥ (द्वितीयव्रतमधिकृत्याहः—)

तिव्वरागा य जा भासा, तिव्वदोसा तहेव य। मुसावायस्स वेरमणे, एस वुत्ते अइक्कमे ॥ २ ॥

तिव्व० तीव्ररागा उत्कटविषयानुबन्धा या काचिद्भाषा, तीव्रद्वेषा उग्रमत्सरा, तथैव चेति समुच्चयपूरणान्यव्ययानि; मृषावादस्य विरमणे अतिक्रमो देशभङ्गः सर्वभङ्गो वेति ॥ २ ॥ (तृतीयवृतमाश्रित्याह—)

उग्गहं सि अजाइत्ता, अविदिन्ने य उग्गहे। अदिन्नादाणस्स वेरमणे, एस वुत्ते अइक्कमे ॥ ३ ॥

उग्ग० अवग्रहमाश्रयमयाचितत्वात् तत्स्वामिनः स्वामिसन्दिष्टाद्वाऽननुज्ञाप्य तत्रैव यदवस्थानमिति गम्यं। अविदत्ते वाऽवग्रह स्वामिनाऽवितीर्णेऽवग्रहे प्रतिनियतावग्रहमर्यादाया वहिरित्यर्थः, यच्चेष्टनमिति शेषः, अतिक्रमो विराधना ॥३॥ (चतुर्थव्रतमङ्गीकृत्याह—)

सद्दा रूवा रसा गंधा—फासाणं पवियारणे। मेहुणस्स वेरमणे, एस वुत्ते अइक्कमे ॥ ४ ॥

सदा० आकारस्याऽलाक्षणिकत्वात् शब्दरूपेत्यादिद्वंद्वः, शब्दा वेण्वादयः, रूपाणि स्त्रीणां, रसा मधुराद्याः, गन्धाः स्रक्चन्दना-

१ सर्वत्र ।

दीनां, स्पर्शा मृदुत्वालीढ्योषिदङ्गादीनां, तेषां प्रवीचारणा रागात्प्रतिसेवना, मैथुनस्य अतिक्रमोऽतिचारस्तस्मादेनां न कुर्यादिति भावः ॥ ४ ॥ (परिग्रहव्रतमुररीकृत्याह —)

**इच्छा मुच्छा य गेही य, कंखा लोभे य दारुणे । परिग्गहस्स वेरमणे, एस वुत्ते अइक्कमे ॥ ५ ॥**

इच्छा० इच्छादीन्येकार्थान्यबुधबोधनायोपात्तानि, यद्वा इच्छा अनागतान्यतरार्थप्रार्थना, मूर्च्छा हृतनष्टार्थशोचना, गृद्धिर्विद्यमानार्थप्रतिबन्धः, अप्राप्तविविधार्थप्रार्थना काङ्क्षा, तद्रूपो लोभः काङ्क्षालोभः, च समुच्चये ॥ ५ ॥ (षष्ठव्रतमुररीकृत्याहः—)

**अइमत्ते अ आहारे, सूरखित्तंमि संकिए । राईभोअणस्स वेरमणे, एस वुत्ते अइक्कमे ॥ ६ ॥**

अइ० साधूनां हि कवलापेक्षया भोजनमानं द्वात्रिंशत्कवला, षड्भागकल्पितजठरापेक्षया [1]चेदं—अद्धं असणस्स सव्वंजणस्स । कुज्जा दवस्स दो भागे ॥ वाउपविआरणट्ठा । छब्भागं ऊणगं कुज्जा ॥ १ ॥ अस्माच्छास्त्रीयप्रमाणादतिमात्रेऽधिके भुक्त इति गम्यं । दिवापि ह्यधिकभोजने रात्रौ भुक्तान्नगन्धोद्गाराः [2]प्रजायन्ते, वमनं वा कदाचित् स्यात्, तत्र च रात्रिभोजनदोषः, समुद्गिलितगलने च बहुतरा दोषाः, सूरस्य रवेः क्षेत्रं उदयास्तलक्षणं नभःखण्डं, तत्र शङ्किते उदयास्तदेश प्राप्तो नवेत्यारेकिते,[3] आहारो भुक्त इति वर्त्तते ॥ ६ ॥ (महाव्रतरक्षणमभिधातुमाह—)

**दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । पढमं वयमणुरक्खे, विरयामो पाणाइवायाओ ॥ ७ ॥**

**दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । बीअं वयमणुक्खे, विरयामो मुसावायाओ ॥ ८ ॥**

१ त्विदं । २ जायन्ते । ३ एव मरुतदेशेऽपि

दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । तइअं वयमणुरक्खे, विरयामो अदिन्नादाणाओ ॥ ९ ॥
दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । चउत्थं वयमणुरक्खे, विरयामो मेहुणाओ ॥ १० ॥
दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । पंचमं वयमणुरक्खे, विरयामो परिग्गहाओ ॥ ११ ॥
दंसणनाणचरित्ते, अविराहित्ता ठिओ समणधम्मे । छट्ठं वयमणुरक्खे, विरयामो राईभोअणाओ ॥ १२ ॥

दंस० दर्शनादीन्यविराध्याऽखण्डितानि परिपाल्य ज्ञानदर्शननिन्दा निह्नवादित्याशातनान्तरायविसंवादयोगाऽकरणेन । सावद्ययोगाननुमत्या च स्थितः समारूढ. श्रमणधर्मे क्षान्त्यादिलक्षणे अनुरक्षामि सर्वातिचाररहितं पालयामि, कीदृशः, विरयामोत्ति, वचनव्यत्ययाद्विरतोऽस्मि, निवृत्तोऽहं प्राणातिपातादेच, एवमग्रेऽपि सूत्रपञ्चके ज्ञेयम् ॥१२॥ अथ प्रकारान्तरेण महाव्रतरक्षणमभिधातुमाह—

आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । पढमं वयमणुरक्खे, विरयामो पाणाइवायाओ ॥ १३ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । बीअं वयमणुरक्खे, विरयामो मुसावायाओ ॥ १४ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । तइअं वयमणुरक्खे, विरयामो अदिन्नादाणाओ ॥ १५ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । चउत्थं वयमणुरक्खे, विरयामो मेहुणाओ ॥ १६ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । पंचमं वयमणुरक्खे, विरयामो परिग्गहाओ ॥ १७ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ समणधम्मे । छट्ठं वयमणुरक्खे, विरयामो राईभोअणाओ ॥ १८ ॥
आलयविहारसमिओ, जुत्तो गुत्तो ठिओ सम्मणधम्मे । तिविहेण अप्पमत्तो, रक्खामि महव्वए पंच ॥ १९ ॥

आल० आलयत्ति, सूचकत्वान्निर्दोषालयवर्त्ती, विहारत्ति, यथोक्तविहारेण विहरन्, समितः ईर्यादिभिः, युक्तो नाग्न्याऽस्नान-भूशयनादन्तपवनशिरस्तुण्डमुण्डनभिक्षाभ्रमणक्षुत्पिपासाशीतातपादिसहनगुरुकुलवासादिलक्षणैः श्रमणगुणैः, गुप्तो गुप्तित्रयेण गुप्त स्थितः श्रमणधर्मे यत्यनुष्ठाने, शेष प्राग्वत् ॥ १८ ॥ आल० त्रिविधेन मनोवाक्कायलक्षणेन करणेनाप्रमत्तः, सुप्रणिहित रक्षामिः, स्वजीवितमिवादरेण पालयामि महाव्रतानि पञ्च ॥ १९ ॥ इदानीमेकाद्येकोत्तरवृद्धिकानां दशान्तानामशुभशुभस्थानानां परिवर्जनाङ्गीकारकरणेन महाव्रतरक्षणमाह—

**सावज्जजोगमेगं, मिच्छत्तं एगमेव अन्नाणं । परिवज्जंतो गुत्तो रक्खामि महव्वए पंच ॥ २० ॥**

सावद्ययोगं सपापव्यापारमेकमेकभेदं सर्वेनिन्द्यकर्मणां सावद्ययोगत्वाव्यभिचारात् । मिथ्यात्व विपर्यस्ताध्यवसायरूपो जीवपरिणामस्तन्निमित्तलौकिकदेवतादिवन्दनादिक्रिया च, तदेकमाभिग्रहिकादिभेदतोऽनेकप्रकारमपि विपर्ययसाम्यादेकप्रकारम् । पवत्ति, अनुस्वारलोपादेवं मिथ्यात्वयदेकविधमित्यर्थ । अज्ञानं नञः कुत्सार्थत्वात् कुत्सितं ज्ञानम्, संशयाद्यात्मको जीवाववोधस्तत्-प्रभवग्रन्थविशेषाश्च, तदपि संशयविपर्ययाद्यनेकविधमप्यवबोधसाम्यादेकभेदमिति, परिवर्जयन् गुप्तो मनोवाक्कायैः संवृतः सन् रक्षा-मिमहाव्रतान्युक्तलक्षणानि पञ्चेति ॥ २० ॥

**अणवज्जजोगमेगं, सम्मत्तं एगमेव नाणं तु । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ २१ ॥**

अण० कुशलानुष्ठानं अनवद्ययोगत्वाव्यभिचारादेकम्, सम्यकत्व क्षायिकादि श्रद्धानसाम्यादेकजीवस्यैकादेकस्यै व भावाच्च, तोरप्यर्थत्वात् ज्ञानमपि एकविधमेवाऽवबोधसाम्यादुपयोगापेक्षया वा, लब्धितो हि बहूनां बोधविशेषाणामेकदा सम्भवेऽप्युपयोगत

एक एव सम्भवत्येकोपयोगत्वाज्जीवानां, नन्ववोधसाम्यात् सम्यक्त्वज्ञानयोः को विशेषः, उच्यते, रुचि· सम्यक्त्वम्, रुचिकारणं तु ज्ञानम्, उपसंपन्नः प्रतिपन्नः, युक्त· श्रमणगुणै· ॥ २१ ॥

**दो चेव रागादोसे, दुन्नि य झाणाइं अट्टरुद्दाइं। परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ २२ ॥**

दोचे० ध्यायते चिन्त्यते वस्त्वाभ्यामिति ध्याने, अन्तर्मुहूर्त्तमात्रकालमेकाग्रचित्ताध्यवसाने, शेष स्पष्टम् ॥ २२ ॥

**दुविहं चरित्तधम्मं, दुन्नि य झाणाइं धम्मसुक्काइं। उवसंपन्नो जुत्तो रक्खामि महव्वए पंच ॥ २३ ॥**

दुवि० चरित्तं चारित्रमोहनीयक्षयादाविर्भूत आत्मनो विरतिरूप· परिणामस्तल्लक्षणो धर्मः, तं, द्वे च ध्याने धर्मशुक्ले, ॥ २३ ॥

**किण्हा नीला काऊ, तिन्नि य लेसाओ अप्पसत्थाओ। परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ २४ ॥**

किण्हा० विभक्तिव्यत्ययात् कृष्णाम्, एवमग्रेऽपि तिस्रोऽपि लिश्यन्ते.श्लिष्यन्ते प्राणिनः कर्मणा [1]याभिस्ता लेश्याः कृष्णादिद्रव्योपाधिका जीवपरिणामविशेषाः, यदुक्तं—कृष्णादिद्रव्यसाचिव्यात्। परिणामो य आत्मनः ॥ स्फटिकस्येव तत्रायं। लेश्याशब्द प्रयुज्यते ॥ १ ॥ एताश्चाप्रशस्ता· क्लिष्टकर्मबन्धहेतुत्वाच्चारित्रादिगुणलाभविघातनिमित्तत्वाच्च ॥ २४ ॥

**तेऊ पम्हा सुक्का, तिन्नि य लेसाओ सुप्पसत्थाओ। उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ २५ ॥**

तेऊ० तैजसीमिति सुप्रशस्ता शुभकर्मबन्धहेतुत्वाच्चारित्रादिगुणलाभकारणत्वात् शुभगतिकारणत्वाच्च, आसां च स्वरूपतार-

---

१ यकाभि

तस्य—तत्र कृष्णा वर्णतो भ्रमराञ्जनादिसमानवर्णै, रसतः कटुकतुम्बादिसमधिकतमरसैः, गन्धतः कुथितगोकडेवरादिसमधिकतमगन्धैः, स्पर्शतः क्रकचादिसमधिकतमस्पर्शैः, सकलकर्मप्रकृतिनिष्पद्भूतैः कृष्णद्रव्यैर्जनितत्वात् कृष्णा । एवमग्रेऽपि योजना कार्या, नीला तु वर्णतः इन्द्रनीलचासपिच्छादिसमवर्णैः, रसतो मरिचपिप्पलीनागरादिसमधिकतररसैः, गन्धतो मृततुरगादिसमधिकतरगन्धैः, स्पर्शतो गोजिह्वादिसमधिकतरकर्कशस्पर्शैः नीला। कापोता तु वर्णतोऽतसीकुसुमपारापतकन्धरादिधूम्रद्रव्यतुल्यवर्णैः, रसतस्तरुणाम्रबालकपित्थादिसमधिकरसैः, गन्धतः कुथितगोधानकुलादिसमधिकगन्धैः, स्पर्शतः कठोरपलाशतरुपत्रादिसमधिकस्पर्शैः कापोता। तेजसी तु वर्णतो वह्निज्वालाशुकमुखादिरक्तद्रव्यसमानवर्णैः, रसतः परिणताम्रपक्वकपित्थादिसमधिकरसैः, गन्धतो विचकिलपाटलादिसमधिकगन्धैः, स्पर्शतः शाल्मलीफलतूलादिसमधिकस्पर्शैः तेजसी । पद्मा तु वर्णतो हरिद्रादिपीतद्रव्यसमवर्णैः रसतो वरवारुणीमद्यादिसमधिकरसैः, गन्धतः शतपत्रिकापुटपाकवासविशेषगन्धादिसमधिकतरगन्धैः, स्पर्शतो नवनीतरूतादिसमधिकतरसुकुमारस्पर्शैः पद्मा। शुक्ला तु वर्णतः शङ्खक्षीररजतादिसदृशवर्णैः, रसतो मृद्वीकाखण्डक्षीरशर्करादिसमधिकतमशुभरसैः, गन्धतः कर्पूरमालतीमाल्यादिसमधिकतमसुरभिगन्धैः, स्पर्शतः शरीषपुष्पादिसमधिकतमसुकुमारस्पर्शैः शुक्ला। आसां च स्वरूपतारतम्यं जम्बूफलखादकपुरुषषट्कदृष्टान्तेन ग्रामघातकचौरपुरुषषट्कदृष्टान्तेन च ज्ञेयम् ॥ २५ ॥

**मणसा मणसच्चविऊ, वायासच्चेण करणसच्चेण । तिविहेण वि सच्चविऊ, रक्खामि महव्वये पंच ॥ २६ ॥**

मण० मनसा शुभभावरूपेण चेतसा करणेन रक्षामि महाव्रतानि पञ्चेति सर्वत्र [1]योगः, कीदृशः सन्नित्याह—मनसः सत्यं मनःसत्यं संयम इत्यर्थः, स चाऽकुशलमनोनिरोधाऽकुशलमनःप्रवर्त्तनलक्षणस्तं वेद्मि, सम्यगासेवनयेति मनःसत्यविद्वान् सन्,

१ योज्यं

तथा वाक्सत्येन कुशलाऽकुशलवचनोदीरणनिरोधरूपेण वाक्संयमेन, करणसत्येन क्रियासत्येन कायसंयमेनेत्यर्थः, स च सति कार्ये उपयोगतो गमनागमनादिविधानम्, तदभावे तु संलीनकरचरणाद्यवयवाऽवस्थानं यदिति। अनेन च भङ्गत्रयाभिधानेनाऽन्यदपि द्विकसंयोगभङ्गत्रयं सूचितम्, तद्यथा, मनोवाक्सत्येन १। मनःकायसत्येन २। वाक्कायसत्येन ३। वेति। तथा त्रिविधेनापि मनोवाक्कायरूपेण करणेन सत्यविद्वान् संयमज्ञः, तत्पालक इत्यर्थ, अनेन त्रिकसंयोगभङ्गो दर्शितः, इत्येवं सप्तविकल्पेन संयमेन, रक्षामि महाव्रतानि पञ्च ॥ २६ ॥

**चत्तारि य दुहसिज्जा, चउरो सन्ना तहा कसाया य। परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ २७ ॥**

चत्ता० चतस्रश्चोऽभ्युच्चये, शेरते आस्विति शय्याः, दुःखदाः शय्याः दुःखशय्याः, द्रव्यतस्तथाविधदुष्टखट्वारूपाः; भावतस्तु दुःस्थचित्ततया दुःश्रमणतास्वभावाः, प्रवचनाऽश्रद्धान १। परलाभप्रार्थन २। कामाशंसन ३। ज्ञानादिप्रार्थन ४। विशेषिता ज्ञेया। एतासां स्वरूपं च श्रीस्थानाङ्गसूत्रतो विशेषतो ज्ञेयम्। चतस्रः संज्ञा आहाराद्याः, तत्राहारसंज्ञा आहाराभिलाषो रिक्तोदरताऽऽहारकथाश्रवणादिजन्यः १ भयसंज्ञा भयमोहनीयसंपाद्यो जीवपरिणाम, हीनसत्त्वता भयवार्त्ताश्रवणभीषणदर्शनादिजन्यः २ मैथुनसंज्ञा चित्तमांसशोणितता सुरतकथाश्रवणादिजन्यो मैथुनाभिलाष ३ परिग्रहसंज्ञा लोभिता सचेतनादिपरिग्रहदर्शनादिजन्या ४ कषायाश्च क्रोधाद्याः प्रत्येकं संज्वलनादिभेदेन चतुर्भेदाः ॥ २७ ॥

**चत्तारि य सुहसिज्जा, चउव्विहं संवरं समाहिं च। उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ २८ ॥**

चत्ता० चतस्रः सुखशय्याः दुःखशय्याविपरीताः, चतुर्विध संवरं संयमम्, स च मनोवाक्कायानामकुशलत्वनिरोधः कुशलत्वेनोदीरणानि, महामूल्यवस्त्रहिरण्यादिपरिहाररूपोपकरणसंयमश्च ॥ पुस्तक १। वस्त्र २। तृण ३। चर्म ४। पंचकपरिहाररूपो-

पकरणसंयमो वा, पुस्तकादीना स्वरूप तु प्रवचनसारोद्धारादवधार्यम्, समाधिं च प्रशस्तभावाविरोधलक्षणं दर्शनज्ञानतपचारित्र-विषयभेदाच्चतुर्विधम्, दर्शनादीनां समस्तानाम् वा विरोधमित्यर्थः ॥ २८ ॥

**पंचेव य कामगुणे, पंचेव य अण्हवे महादोसे। परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ २९ ॥**

पचे० पंचशब्दरूपरसस्पर्शगन्धभेदात्, काम्यन्ते काङ्क्ष्यन्ते रागातुरैरिति कामा अभिलषणीयपदार्थास्त एवात्मसंयमनैकहेतुत्वाद् गुणा. सूत्रतन्तवः आत्मगुणोपघातकारणत्वाद्वा गुणाः कामगुणास्तान्, पञ्चैव प्राणातिपातादिभेदाः, आस्त्रौत्यादत्ते कर्म यैस्ते आस्त्रवास्तान्, कीदृशान् महादोषान् दारुणदुःखहेतुत्वात् प्रकृष्टदूषणानीत्येतान् ॥ २९ ॥

**पंचिंदियसंवरणं, तहेव पंचविहमेव सज्झायं । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ३० ॥**

पचि० तत्रेन्दनादिन्द्रो जीव. सर्वविषयोपलब्धिभोगलक्षणपरमैश्वर्ययोगात्, तस्य लिङ्गमितीन्द्रियं श्रोत्रादि, तच्च द्विविधं द्रव्येन्द्रियं भावेन्द्रियं च, तत्र निर्वृत्त्युपकरणे द्रव्येन्द्रियम्, लब्ध्युपयोगौ भावेन्द्रियम्, तत्र निर्वृत्तिराकारः, सा च बाह्याभ्यन्तरा च, तत्र बाह्यानैकधा अभ्यन्तरा पुनः क्रमेण श्रोत्रादीनां कदम्बपुष्प १ । धान्यमसूरा २ । अतिमुक्तपुष्पचन्द्रिका ३ । क्षुरप्र ४ । नानाकार ५ । संस्थाना, उपकरणेन्द्रिय विषयग्रहणसामर्थ्यं यस्मिन्नुपहते निर्वृत्तिसद्भावेऽपि विषयं नादत्ते, लब्धीन्द्रियं यस्तदावरणक्षयोपशमः, उपयोगेन्द्रियं य स्वविषये व्यापारः । तेषामिष्टानिष्टविषयेषु रागद्वेषाभ्यां प्रवर्त्तमानानां निग्रहणं पञ्चेन्द्रियसंवरणम्, पञ्चविधमेव वाचनापृच्छनापरावर्त्तनानुप्रेक्षाधर्मकथालक्षणम्, तत्र वक्ति शिष्यस्तं प्रति गुरोः प्रयोजनं वाचनं पाठनमित्यर्थः १ । पूर्वाधीतसूत्रादेः शङ्कितादौ प्रश्नः पृच्छना २ । परावर्त्तना सूत्रस्य विस्मरणभयाद् गुणनं ३ । अनुप्रेक्षा अर्थचिन्तनम् ४ । धर्मस्य श्रुतरूपस्य कथा व्याख्या धर्मकथा ५ । सज्झायन्ति शोभनमा मर्यादयाऽध्ययनं श्रुतस्याधिकमनुसरणं स्वाध्यायस्तम् ॥ ३० ॥

दिशि लोकाभिगमो लोकावबोधः, विभङ्गता चास्य शेषदिक्षु लोकस्यानवबोधेन, तत्प्रतिषेधनात् १ । पञ्चसु दिक्षु लोकाभिगमो नैकस्यां कस्यांचिदिति, इहापि विभङ्गता एकदिशि लोकनिषेधात् २ । क्रियावरणो जीवः, क्रियामात्रस्यैव प्राणातिपातादेर्जीवैः क्रियमाणस्य दर्शनात्तद्धेतुकर्मणश्चादर्शनात् क्रियैवावरणं कर्म यस्य स क्रियावरणो जीव इत्यवष्टम्भपरं तृतीयम् । विभङ्गता चास्य कर्मणोऽदर्शनेनाऽनभ्युपगमाच्च ३ । शरीरावगाढक्षेत्रबाह्याभ्यन्तरपुद्गलरचिताऽवयवशरीरो जीव इत्यवष्टम्भवत्, भवनपत्यादीनां बाह्याभ्यन्तरपुद्गलपर्यादानतो वैक्रियकरणदर्शनात्, विभङ्गता चास्य मनुष्यादिशरीराणामेव दर्शनात् ४ । देवानां बाह्याभ्यन्तरपुद्गलादानविरहेण वैक्रियवतां दर्शनादऽबाह्याभ्यन्तरपुद्गलरचिताऽवयवशरीरो जीव इत्यवसायवत् ५ । देवानां वैक्रियवतां दर्शनाद्रूप्येव जीव इत्यवष्टम्भवत् ६ । वायुना चलतः पुद्गलकायस्य दर्शनात्सर्वमेवेदं वस्तु जीवा एव चलनधर्मोपेतत्वात्, विभङ्गता चास्याऽचेतनानामपि वस्तूनां चलनस्य दर्शनात् ७ । परिवर्जयन् विभङ्गज्ञानोपलब्धार्थप्ररूपणां परिहरन्नित्यर्थः ॥ ३३ ॥

**पिंडेसण पाणेसण, उग्गह सत्तिक्कया महज्झयणा । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ३४ ॥**

पिंडे० पिंडस्य भक्तस्यैषणा ग्रहणप्रकाराः, ताश्चैताः, संसट्ठ १ मसंसट्ठा २ । उद्धड ३ तह अप्पले(विया)वडा ४ चेव । उग्गहिआ ५ पग्गहिआ ६ । उज्झिअधम्मा ७ य सत्तमिआ ॥ १ ॥ तत्राऽसंसृष्टा हस्तमात्राभ्यां चिन्त्या, गाथायां सुखोच्चारार्थोऽन्यथा पाठः १ । संसृष्टापि ताभ्यामेव २ । उध्धृता नाम पाकस्थानात् स्थाल्यादौ भोजनजातमुध्धृतं ततोऽसंसृष्टोहस्तः, संसृष्टं मात्रम्, असंसृष्टं वा मात्रं संसृष्टो वा हस्तः, एवं गृह्णतस्तृतीया ३ । अल्पलेपाऽल्पस्याऽभावार्थत्वान्निर्लेपं चणकादि गृह्णतः ४ । अवगृहीता भोजनकाले शरावादिषु भोक्तुकामस्योपहृतं भोजनजातम्, यत्ततो गृह्णतः ५ । प्रगृहीता नाम भोजनवेलायां भोक्तुकामाय दातुं भोक्तुं वाऽभ्युद्यतेन करादिना प्रगृहीतं गृह्णतः ६ । उज्झितधर्मा यत्परित्यागार्हमन्ने अन्ये च द्विपदादयो यत् नाव-

भेदात्, तपति दुनोति शरीरकर्माणीति तपस्तस्य कर्म क्रिया तपःकर्म तपोऽनुष्ठानमित्यर्थः, तत्रानशनमाहारत्यागस्तच्च द्विधा, तत्र इत्वरं चतुर्थादिषण्मासान्तमधिकृततीर्थमाश्रित्य, यावत् कथिकत्वाजन्मभावि त्रिधा, पादपोपगमनेङ्गितमरणभक्तिपरिज्ञाभेदात्, तत्र पादपस्यैव वृक्षस्यैव च्छिन्नपतितस्योपगमनं अत्यन्तनिश्चेष्टतयाऽवस्थानम्, यस्मिंस्तत्पादपोपगमनम्, तथेङ्गिते नियमिते देशे इतिगम्यम्, मरणं मरणप्रतिज्ञा यत्र तदिङ्गितमरणं २। भक्तस्यैव भोजनस्यैव न चेष्टादेरपि प्रत्याख्यानं वर्जनम्, यत्र तद्भक्तप्रत्याख्यानं ३। अवमोदरिका द्रव्यत उपकरणभक्तपानविषया, भावतस्तु क्रोधादित्यागः। वृत्तेर्भिक्षाचर्यारूपायाः सङ्क्षेपोऽभिग्रहविशेषात्संकोचनं वृत्तिसङ्क्षेपः। अभिग्रहाश्च द्रव्यतोऽलेपकृतादेव द्रव्यं ग्रहीष्ये, क्षेत्रतः परगामगृहपञ्चकादिलब्धम्, कालतः पूर्वाह्णादौ, भावतो गानादिप्रवृत्ताल्लब्धमिति, एवं चतुर्विधाः, रसाः क्षीराद्यास्तत्त्यागः कायक्लेशो लोचवीरासनादिर्बहुधा, संलीनता इन्द्रियकषाययोगविषया गुप्तता, विविक्तशयनासनता चेति ॥ ३२ ॥

## सत्त य भयठाणाइं, सत्तविहं चेव नाणविब्भंगं। परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ ३३ ॥

सत्त॰ सप्तेहलोकादिभयभेदात्, भयस्य स्थानानि, तत्र मनुष्यादिकस्य सजातीयादन्यस्मात्मनुष्यादेः, सकाशाद्यद् भयं तदिहलोकभयम् १। तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद् भयं तत्परलोकभयम् २। आदानं धनं तदर्थं चौरादिभ्यो यद् भयं तदादानभयं ३। अकस्मादेव बाह्यनिमित्ताऽनपेक्षमेव यद्भयं तदकस्माद्भय ४। वेदना पीडा, तद्भयं वेदनाभयं ५। मरणाद्भयं मरणभयं ६। अश्लोकभयमकीर्त्तिभयमिति ७। सप्तविधमेव पूर्वापरनिपाताद्विभङ्गज्ञानम्, तत्र विरुद्धो वितथो वा अयथावस्तुभङ्गो वस्तुविकल्पो यस्मिंस्तद्विभङ्गं, तच्च तज्ज्ञानं च साकारत्वादिति विभंगज्ञानं मिथ्यात्वसहिताऽवधिरित्यर्थः। तच्चैवं—इग १ पणदिसिलोगगमो २। किरिआवरणो जिओ ३ तणूणमओ ४ ॥ अतणुमओ ५ रुविज्जीवे ६ सव्वजीवा ७ सगविभंगा ॥ १ ॥ एक-

परिक्रियास० ६ । अन्योऽन्यक्रियासप्तैकका: ७ । 'महज्झयणत्ति' सूत्राकृताङ्गस्य द्वितीयश्रुतस्कन्धे महान्ति प्रथमश्रुतस्कन्धाध्ययनेभ्यः शकाशाद् ग्रन्यतो बृहत्यध्ययनानि तानि च—पुण्डरिकं १ । क्रियास्थानं २ । आहारपरिज्ञा ३ प्रत्याख्यानक्रिया ४ । अनाचारश्रुतं ५ । आर्द्रककुमारीय ६ । नालन्दीय ७ । चेति ॥ ३४ ॥

**अट्ठ य मयट्ठाणाइं, अट्ठ य कम्माइं तेसि बंधं च । परिवज्जंतो गुत्तो रक्खामि महव्वए पंच ॥ ३५ ॥**

अट्ठ० अष्टौ, जाति १ । कुल २ । रूप ३ । बल ४ । तप ५ । ऐश्वर्य ६ । श्रुत ७ । लाभभेदान्मदस्थानानि मदभेदाः, तत्र मातृकी विप्रादिका वा जातिः १ । कुल पैतृकमुग्रादिकं वा, शेषाणि स्पष्टानि ॥ अत्र च दोषः जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह, जात्यादिहीनतां परभवे च निस्संशयं लभते १ । अष्टौ कर्माणि ज्ञानावरणीयादीनि, तेषां कर्मणा बन्धोऽभिनवग्रहणं तं वा ॥ ३५ ॥

**अट्ठ य पवयणमाया दिट्ठा अट्ठविहनिट्ठिअट्ठेहिं । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ३६ ॥**

अट्ठ० अष्टईर्यासमित्यादिभेदात् प्रवचनस्य मातर इव तत्प्रसूतिहेतुत्वात् प्रवचनमातरः, दृष्टा उपलब्धाः, कैरित्याह, अष्टविधानिष्ठिताः क्षयं गता अर्थाः प्रक्रमात् ज्ञानावरणादिपदार्था येषां ते तथा तैर्जिनैरित्यर्थः ॥ ३६ ॥

**नव पावनिआणाइं, संसारत्था य नवविहा जीवा । परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ ३७ ॥**

नव० पापानि पापनिबन्धनत्वान्निदानानि भोगादिप्रार्थनालक्षणानि पापनिदानानि, तानि च-"निव १ सिट्ठि २ इत्थि ३ पुरिसे ४ । परपविआरे ५ सपविआरे ६ ॥ अप्पयसुर ७ दरिद्द ८ सड्ढे ९ । हुज्जा नव निआणा १ । व्याख्या-कश्चित्साधुः साध्वी वा निदानं करोति, साक्षाद्देवलोको वा न दृष्टः, तत इमे राजान एव देवाः । अतो यद्यस्ति तपोऽनुष्ठानादीनां फलं ततो

[1]काङ्क्षन्ति तत्, अर्द्धत्यक्तं वा गृह्णतः ६। पानैषणा अप्येता एव, नवरं चतुर्थ्यां नानात्वम्, तत्र ह्यायामसौवीरादीनां निर्लेपत्वं ज्ञेयम्, उग्गहत्ति सूचकत्वादवग्रहप्रतिमाः, वसत्यभिग्रहा इत्यर्थः ॥

तथाहि—जहाचिंतय १ सपरिग्गह २। सउग्गह ३ परुग्गहे ४ संइगुवगहे ५ ॥ सागरिसंथारुग्गह ६। अहसंघडिउग्गहा ७ सत्त ॥ १ ॥ तत्र पूर्वमेव विचिन्त्यैवंभूत उपाश्रयो मया ग्राह्यो नान्यथाभूत इति तमेव याचित्वा गृह्णतः, प्रथमा १। अहमन्येषां कृतेऽवग्रह याचिष्ये, अन्येषां चावग्रहे गृहीते सति वत्स्यामीति द्वितीया, आद्या सामान्येन, इयं तु गच्छान्तर्गतानाम् साम्भोगिकानामसाम्भोगिकानाम् चोद्युक्तविहारिणा यतस्तेऽन्योऽन्यार्थं याचन्ते इति २। अन्यार्थमवग्रहं याचिष्ये, अन्यावगृहीते तु न स्थास्यामीति, एषा त्वऽहालंदि(तु यथालन्दि)कानां यतस्ते सूत्राविशेषमाचार्यादभिकाङ्क्षते आचार्यार्थं तं याचन्त इति, ३। अहमन्येषां कृतेऽवग्रह न याचिष्येऽन्यावगृहीते तु वत्स्यामि, इयं तु गच्छ एवाभ्युद्यतविहारिणां जिनकल्पार्थं परिकर्म कुर्वतां स्यात् ४। अहमात्मकृतेऽवग्रह याचिष्ये, नाऽन्येषां कृते, इयं तु जिनकल्पिकस्य ५। यदीयमवग्रहं ग्रहीष्ये तदीयमेव चेत् कटकादिसंस्तारकं ग्रहीष्यामि, इतरथोत्कटुको वा उपविष्टो वा रजनीं गमिष्यामीत्येषापि जिनकल्पिकादेरिति ६। सप्तम्यपि पूर्वोक्तैव, नवरं यथासंस्तृतमेव शिलादिकं ग्रहीष्ये नेतरदिति ७ ॥

'सत्तिक्कयत्ति' सप्तैकका:, अनुद्देशकतया एकसरत्वेनैकका अध्ययनविशेषा आचाराङ्गस्य द्वितीयश्रुतस्कन्धे (द्वितीय) चूडारूपास्ते च समुदायतः सप्तेति कृत्वा सप्तैकका अभिधीयन्ते, तेषामेकोऽपि सप्तैकक इति व्यपदिश्यते, तथैव नामत्वात्, तत्राद्यः स्थानः सप्तैककः १। नैषेधिकीसप्तैककः, नैषेधिकीस्वाध्यायभूमिः २। उच्चारप्रश्रवणविधिसप्तैककः ३। शब्दसप्तैकक ४। रूपसप्त० ५।

1 नेच्छन्ति

परिक्रियास० ६ । अन्योऽन्यक्रियासप्तैककाः ७ । 'महज्झयणत्ति' सूत्राकृताङ्गस्य द्वितीयश्रुतस्कन्धे महान्ति प्रथमश्रुतस्कन्धाध्ययनेभ्य' शकाशाद् ग्रन्थतो बृहत्यध्ययनानि तानि च—पुण्डरिकं १ । क्रियास्थानं २ । आहारपरिज्ञा ३ प्रत्याख्यानक्रिया ४ । अनाचारश्रुतं ५ । आर्द्रककुमारीय ६ । नालन्दीय ७ । चेति ॥ ३४ ॥

**अट्ठ य मयट्ठाणाइं, अट्ठ य कम्माइं तेसिं बंध च । परिवज्जंतो गुत्तो रक्खामि महव्वए पंच ॥ ३५ ॥**

अट्ठ० अष्टौ, जाति १ । कुल २ । रूप ३ । बल ४ । तप ५ । ऐश्वर्य ६ । श्रुत ७ । लाभभेदान्मदस्थानानि मदभेदाः, तत्र मातृकी विप्रादिका वा जातिः १ । कुल पैतृकमुग्रादिकं वा, शेषाणि स्पष्टानि ॥ अत्र च दोषः जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह, जात्यादिहीनतां परभवे च निस्संशयं लभते १ । अष्टौ कर्माणि ज्ञानावरणीयादीनि, तेषां कर्मणा बन्धोऽभिनवग्रहणं तं वा ॥ ३५ ॥

**अट्ठ य पवयणमाया दिट्ठा अट्ठविहनिट्ठिअट्ठेहिं । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ३६ ॥**

अट्ठ० अष्टईर्यासमित्यादिभेदात् प्रवचनस्य मातर इव तत्प्रसूतिहेतुत्वात् प्रवचनमातरः, दृष्टा उपलब्धाः, कैरित्याह, अष्टविधानिष्ठिताः क्षयं गता अर्थाः प्रक्रमात् ज्ञानावरणादिपदार्था येषां ते तथा तैर्जिनैरित्यर्थः ॥ ३६ ॥

**नव पावनिआणाइं, संसारत्था य नवविहा जीवा । परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ ३७ ॥**

नव० पापानि पापनिबन्धनत्वान्निदानानि भोगादिप्रार्थनालक्षणानि पापानिदानानि, तानि च-"निव १ सिद्धि २ इत्थि ३ पुरिसे ४ । परपविआरे ५ सपविआरे ६ ॥ अप्पयसुर ७ दरिद्द ८ सड्ढे ९ । हुज्जा नव निआणा १ । व्याख्या-कश्चित्साधुः साध्वी वा निदानं करोति, साक्षाद्देवलोको वा न दृष्टः, तत इमे राजान एव देवाः । अतो यद्यस्ति तपोऽनुष्ठानादीनां फलं ततो

भवेयमागामिनि राजाऽहम्, ततोऽच्चलोकं गत्वा तत्रोत्पद्यते, परं बोधिर्दुर्लभा तस्य १ श्रेष्ठ्यादिकुले वा भवेयम्, ततस्तत्रोत्पद्यते परं बोधिर्दुर्लभा २ पुमान् बहुव्यापारः संग्रामादिदुष्करकारी च, ततः शोभनं स्त्रीत्वम्, ततस्तत्रोत्पद्यते परं बोधि० ३ साध्वी स्त्री सर्वत्राऽसमर्था, एकाकिनी ग्रामान्तरादिसंचारणे सर्वपराभूता च, पुरुषश्च सर्वकार्यक्षमः, तत उग्रादिपुत्रो भवेयमिति निदानं करोत्यस्यापि बोधिर्दुर्लभा ४ साधुः साध्वीवेतिचिन्तयति, इमे मानुष्या भोगा मूत्रपुरीषादिबीभत्सा, ये पुनरिमे देवा अन्यं देवमन्यां देवीं वा आत्मानं वा देवदेवीरूपं विकुर्व्य भुञ्जन्ति, एवं साधु० ततोऽहमपि तथा भूयांसम्, अस्यापि बोधिर्दुर्लभा ५। अशुभा मानुष्यभोगाः, ये पुनर्देवा अन्यं देवं देवीं वा न परिचरन्ति, किंत्वात्मानमेव देवदेवीरूपं विकुर्व्य परिचरन्ति, एवं साधु० ततस्तेषु भूयांसम्, ततस्तथा भूत्वा भवान्तरे धर्मं शृणोति न श्रद्दधाति, परं तापसादिर्भूत्वा विरतः स्त्रीकाममूर्च्छितो मृत्वा कल्विषेषूत्पद्यते, ततः पुनः पुनः एडमूकतयोत्पद्यते, दुर्लभबोधिः ६ निर्विण्णदिव्यमाणुजकामभोगो निदानं करोति, यत्र न प्रविचारणा तत्र भवेयम्; ततश्च्युत्वा देशविरतः सुलभबोधिः स्यात् ७ इमे उग्रादिपुत्रा व्रतव्यवस्थिताः साधून् प्रतिलाभयन्ति ततोऽहमपि तेषु भूयांसम्, ततस्तत्रोत्पद्य द्वादशविधं श्राद्धधर्मं प्रपद्यते, न यतिधर्मं ८ यदि मे तपोनियमफलमस्ति ततो दरिद्रकुले भवेयमेवं मे आत्मा सुखोत्तारो भवति, ततो देवेषूत्पद्य दरिद्रकुलोत्पन्नः प्रव्रजति, न सिद्ध्यति, ततोऽनिदानेन भाव्यं ९ संसारस्थाश्च नवविधा पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियभेदात् ॥ ३७ ॥

**नव बंभचेरगुत्तो, दुनवविहं बंभचेरपरिसुद्धं। उवसंपन्नो जुत्तो रक्खामि महव्वए पंच ॥ ३८ ॥**

नव० सूचकत्वान्नवब्रह्मचर्यगुप्तिगुप्तः, गुप्तयश्च—वसहि १ कह २ निसज्जि ३ दिअ ४। कुड्डिंतर ५ पुव्वकीलिए ६ पणीए ७ ॥ अइमायाहार ८ विभूसणाइ ९। नव बंभचेरगुत्तीओ ॥ १ ॥ इति रूपाः, द्विनवविधं अष्टादशप्रकारं ब्रह्मचर्यम्, यदुक्तं—ओरालिअं च दिव्वं। मणवयकायाणकरणजोएण ॥ अणुमोअणकारावण। करणेणट्ठारसा बंभं ॥१॥ परिशुद्धं निर्दोषं ॥ ३८॥

**उवघायं च दसविहं, असंवरं तह य संकिलेसं च । परिवज्जंतो गुत्तो, रक्खामि महव्वए पंच ॥ ३९ ॥**

उव० उपहननमुपघातस्तं दशविधम्, तथा—उग्गम १ उप्पा २ एसण ३ । परिहर ४ परिसाडणा य ५ नाणतिगे ८ ॥ संरक्खणा ९ चिअत्ते १० । उवघाया दस इमे हुंति ॥ १ ॥ तत्रोद्गमेनाधाकर्मादिना षोडशविधेनोपहननं विराधन चारित्रस्य तत्साधकभक्तादेर्वाऽकल्पता उद्गमोपघात. १ । एवमुत्पादनया धात्र्यादिदोषरूपया २ । एषणया शङ्कितादिभेदया उपघातः ३ । परिहरणाल्लक्षणरहितस्याऽकल्पस्य चोपकरणस्य परिभोगस्तया ४ । परिशातना वस्त्रपात्रादेः समारचनम्, तेनोपघात स्वाध्यायस्य श्रमादिना शरीरस्य संयमस्य वा ५ । ज्ञानोपघातः श्रुतज्ञानापेक्षया प्रमादतोऽकालस्वाध्यायादिभिः ६ । दर्श० शङ्कितादिभिः ७ । चारित्रो० समितिभङ्गादिभिः ८ । संरक्षणेन शरीरादिविषयमूर्च्छयोपघातः परिग्रहविरतेरिति संरक्षणोपघातः ९ । अचिअत्तमप्रीतिकम् तेन विनयादेरुपघातः १० ॥

असंवरं संक्लेशोऽसमाधिस्तं च दशविधम्, तद्यथा—जोगिं ३ दि ८ उवहि ९ सूई १० । असंवरो दसह संकिलेसो अ ॥ नाणाइ ३ जोग ६ उवही ७ । वसहि ८ कसाय ९ ऽन्नपाणेहिं १० ॥ १ ॥ व्याख्या—मनोवाक्कायानामकुशलानामसंवरोऽनिग्रह ३ । श्रोत्रेन्द्रियादीनामिष्टानिष्टविषयेषु रागद्वेषाभ्यां प्रवर्त्तमानानामसंवरणम् ८ । उपधेरप्रतिनियताऽकल्पनीयस्य वस्त्रादेरसंवरो ग्रहणमुप० ९ । अथवा इतस्ततो [1]विक्षिप्तस्य वस्त्राद्युपकरणस्याऽसंवरणमुपकरणासंवरः (णं), अयं चौधिकोपकरणापेक्षः ९ । सूच्याः उपलक्षणात्वात् कुशाग्राणां च शरीरोपघातकारिणां यदसङ्गोपनं स शूचीकुशाग्रासंवरः, एष तूपलक्षणात्वात् सर्वोपग्रहिकोपकरणापेक्षः १० । संक्लेशोऽसमाधिः ज्ञानादीनां संक्लेशोऽविशुद्धमानता ३ । मनःप्रभृतीनाम् ६ उपधिवस्त्रादिस्तद्विषयः उपधि-

---

१ अलाक्षणिकस्य २ विप्रकीर्णस्य

संक्लेश. ७ वसतेर्मनोज्ञाऽमनोज्ञादिद्वारेणाऽसमाधानं वसतिसं० ८ । कषाया एव कषायैर्वा संक्लेश, कषा० ९ । अन्नपानाश्रितः संक्लेशोऽन्नपानसंक्लेशः १० ॥ ३९ ॥

**सच्चसमाहिट्ठाणा, दस चेव दसाओ समणधम्मं च । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ४० ॥**

सच्च० सत्यं दशविधम्, तद्यथा-जणवय १ संमय २ ठवणा ३ । नामे ४ रूवे ५ पडुच्चसच्चे अ ६ ॥ ववहार ७ भाव ८ जोगे ९ । दसमे ओवम्मसच्चे अ १० ॥ १ ॥ सत्यशब्दः प्रत्येकम् योज्यते, जनपदसत्यम्, यद्यदर्थवाचकतया रूढं देशान्तरेऽपि तत्तदर्थवाचकतया प्रयुज्यमानं सत्यमवितथं जनपदसत्यम् १ । यथा कौङ्कणादिषु पयः पिचं नीरमुदकमित्यादिसत्यत्वं चास्याऽदुष्टम्- विवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वेन व्यवहारप्रवृत्त्यङ्गत्वात्, एवं शेषेष्वपि भाव्यं १ । सम्मतसत्यं, कुवलयकुमुद- कमलारविन्दादीनां समाने पङ्कसम्भवे गोपालादीनामपि सम्मतमरविन्दमेव पङ्कजमिति । तत्र कुमुदं चन्द्रविकाशि, कुवलयं नीलोत्पलम्, कमल रविविकाशि, अरविन्दम् स्थलपद्मम्, अतस्तत्र सम्मततया पङ्कजशब्दः सत्यः, कुवलयादावसत्योऽसम्मतत्वात् २ स्थापनासत्य यल्लेप्यादिकमर्हदादिविकल्पेन स्थाप्यते तद्विषयम्, अजिनोऽपि जिनोऽयमित्यादि ३ नामसत्य यथा कुलमवर्द्धयन्नपि कुलवर्द्धन इत्यु- च्यते ४ रूपापेक्षया सत्यं रूपसत्यम्, यथा छद्मयतिः[२] प्रव्रजितरूपं धारयन् प्रव्रजित उच्यते ५ प्रतीत्याश्रित्य वस्त्वन्तरं सत्यं प्रतीत्य सत्यं [३]यथान्त्याङ्गुल्यपेक्षयाऽनामिकाया दीर्घत्वं ह्रस्वत्वं चेति ६ व्यवहारसत्यम्, यथा दह्यते गिरिर्गलति भाजनम्, अत्र च गिरिगत- तृणादिदाहे, उदके च गलति सति व्यवहारः प्रवर्त्तते ७ । भाव भूयिष्ठशुक्लादिपर्यायमाश्रित्य सत्य भावसत्यम्, यथा शुक्ला बला केति, सत्यपि पञ्चवर्णसम्भवे शुक्लवर्णोत्कटत्वात् शुक्लेति ८ योगात्सम्बन्धात् सत्यम्, यथा दण्डयोगाद्दण्डः, छत्रयोगाच्छत्रः, इत्यादि ९

१ अभिसबध्यते । २ प्रपञ्चयति । ३ अनामिकाङ्गुल्या अन्या आश्रित्य ॥

उपमैवौपम्यम्, तेन सत्यं औपम्यसत्यम्, यथा समुद्रवत्तडागमित्यादि ॥ १० ॥

समाधे रागादिरहितचित्तस्य स्थानान्याश्रयाः समाधिस्थानानि तान्यपि दश, तद्यथा—इत्थीकहा १ सण २ इंदिअ । निरक्ख ३ संसत्तवसइजणया ४ अइमायाहार ५ पणीय ६ । पुव्वरयमरण परिहारो ७ ॥ १ ॥ नयसाए अ ८ सिलोगो ९ । सज्जिज्जनमद्दरूवगंधे अ १० ॥ इअ दस समाहिठाणा । सपरेसि समाहिकारणओ ॥ २ ॥ स्त्रियो नारीदेवीतिरश्च्यः, उपलक्षणात् पण्डकाश्च तेषां, स्त्रीणां केवलानामिति गम्यते, कथां धर्मदेशनादिलक्षणवाक्यप्रबन्धरूपां तन्नेपथ्यादिवर्णनरूपां वा [1]परिहरेत् १ आसनान्युपलक्षणत्वात् शयनादीनि च, कामोद्रेककारित्वाद्वर्जयेत् २ न च साते सुखे रसस्पर्शलक्षणविषयसंपाद्ये सृजेदिति योग.। सातग्रहणादुपशमसौख्यप्रतिबद्धतायां न निषेधः ८ श्लोके कीर्त्तौ न माद्येत ९ शब्दादिषु न सङ्गं कुर्यात् १० शेषाणि स्पष्टानि ॥

दशैव दशा॰ दशाधिकाराभिधायकत्वात् । दशा इति बहुवचनान्त स्त्रीलिङ्गम्, शास्त्रस्याभिधानमिति । ताश्चैताः—कम्मविवागाण दसा १ । उवासगं २ तगड ३ ऽणुत्तरदसा य ४ ॥ पन्हावागरणगदसा ५ । दसासुअक्खंधगदसा ६ य ॥ १ ॥ बंधाइदसा चउरो १० । सेसा वक्खाणिआ न वुत्तीए ॥ महव्वय ५ कसाय ४ चउजय ९ । तवेहिं १० दसहा समणधम्मो ॥ २ ॥ तत्र कर्मणोऽशुभस्य विपाक फलं कर्मविपाकस्तत्प्रतिपादिका दशाऽध्ययनात्मकत्वाद्दशा कर्मविपाकदशा , विपाकश्रुताख्यस्यैकादशाङ्गस्य प्रथम॰ श्रुतस्कंध॰ १ उपासकाः श्राद्धास्तद्व्रतक्रियाकलापप्रतिबद्धा दशा दशाध्ययनोपलक्षिता॰ उपास॰ सप्तममङ्गम् २ अन्तो विनाश॰ कर्मणां तत्फल॰ भूतस्य वा संसारस्य कृतो यैस्ते अन्तकृतस्तीर्थंकरादयस्तेषां दशा अन्त॰ अष्टमाङ्गस्य प्रथमवर्गे दशाध्ययनानीति तत्संख्ययोप॰ लक्षितत्वादन्तकृद्दशा इत्यभिधानेनाष्टममङ्गमुक्तं ३ अनुत्तरोपपातिकाः सर्वार्थसिद्धादिविमानपञ्चकोपपातिनः तद्वक्तव्यताप्रतिबद्धा

---

[1] वर्जयेत्

दशा दशाध्ययनोपलक्षिताः अनुत्तरोपपातिकदशा नवममङ्गम् ४ प्रश्नाः पृच्छा. व्याकरणानि निर्वचनानि, तत्प्रति पादिका दशा प्रश्नव्या० दशममङ्गम् ५ आचारो ज्ञानादिः पञ्चधा, तत्प्रतिपादिका- दशा दशाध्ययनात्मकत्वादाचारदशाः, दशाश्रुतस्कन्ध इति या रूढाः ६ बन्धदशाः ७ द्विगृधिदशा ८ दीर्घदशाः ९ सङ्क्षेपिकदशाः १० [1]अप्रसिद्धा एताः ॥

श्रमणधर्म दशविधं, पञ्च महाव्रत ५ कषायचतुष्कजय ९ तपो १० रूपत्वात्, क्षान्त्यादिभेदतो वा, तत्र मुक्तिर्निर्लोभता, संयम आश्रवनिरोधः, शौचं संयम प्रति निरूपलेपता निरतिचारतेत्यर्थः, आकिञ्चन्यं हेमादित्यागः, शेषाणि स्पष्टानि, अथाशातनावर्जनतो महाव्रतरक्षणमाह— ॥ ४० ॥

**आसायणं च सव्वं, तिगुणं इक्कारसं विवे[2]ज्जंतो । उवसंपन्नो जुत्तो, रक्खामि महव्वए पंच ॥ ४१ ॥**

आसा० आयं ज्ञानादिलाभं शातयतीत्याशातना, अर्हदादेरवज्ञेत्यर्थस्तां सर्वां समस्तां समान्येन, अथवा तिगुणेत्यादि च शब्दस्येह संबन्धात्त्रयो गुणा गुणकारका यस्य स त्रिगुणस्तमेकादशाङ्क त्रयस्त्रिंशतमाशातना इत्यर्थ । ताश्चैताः—पुरओ परकासन्ने । गंता ३ चिठ्ठण ६ निसीअणा य ९ मणे १० ॥ आलोअण ११ पडिसुणणे १२ पुव्वालवणे अ १३ आलोए १४ ॥ १ ॥ तहउवदंस १५ निमंतण १६ । खद्दा १७ इयणे अ १८ अप्पडिस्सुणणे अ १९ खद्धत्ति अ २० तत्थगए २१ । किं २२ तुम २३ तज्जाय २४ नो सुमणे २५ ॥ २ ॥ नो सरसि २६ कहं छित्ता २७ । परिसं भित्ता २८ अणुट्ठिआए कहे २९ संथारपायघट्टण ३० । चिठ्ठु ३१ च ३२ समासणे ३३ आवि ॥ ३ ॥ व्याख्या—गुरोः पुरतो गमने आशातना, यतो मार्गोपदर्शनादिकं तादृग् कारणं विना गुरोः पुरतो गन्तुं न कल्पते, अविनयदोषप्रसङ्गात् १ पक्खत्ति पार्श्वतो गन्ता, तदाप्याशातनाऽविनयदोषात् २ आसन्नं गन्ता, तदापि कासित-

---

१ अप्रतीता २ आ ठेकाणे केटलाक ‘ परिवज्जतो ’ बोले छे पण ते अशुद्ध पाठ जाणवो

क्षुतादिषु श्लेष्माद्यवयवलगनादिनाऽविनयसम्भवात्, एवमन्यत्रापि दोषा वाच्याः ३ एवं स्थाननिषदनाभ्यामपि प्रत्येकं तिस्रस्तिस्र आशातनाः ९ आयमणत्ति, विचारभूमौ प्रागाचमने आशा० १० पूर्वमालोचने, गमनागमनादिविषये ११ अप्रतिश्रवणे, गुरूक्ते श्रुतेऽप्युत्तराऽदाने १२ पुव्वा० गुरोः पूर्वसंलाप्य पूर्वमेवालापयति १३ आलो० अशनादिकं प्राग् साध्वन्तराणामालोचयति, ततो गुरोः १४ उव० अशनादिकं प्राग् शिष्यान्तराणामुपदर्शयति, ततो गुरोः १५ निमं० अशनादिभिः पूर्वमन्यान् निमन्त्रयति ततो गुरुं १६ खद्धत्ति, अशनादिकं गुरुमनापृच्छय यथेच्छमन्येषां ददाति १७ आइअणेत्ति, अशनादिकं गुरुणा सह भुञ्जानः स्वयं स्निग्धं स्निग्धं यथेष्टं भुङ्क्ते १८ अप्रतिश्रवणं प्राग्वन्न वरं प्राग् रात्रौ सुप्तजागरितपृच्छाविषयमिहम् तु सामान्येन १९ खद्ध० गाढशब्देन गुरुं प्रति खरनिष्ठुरं वक्ति २० तत्थ० गुरुं व्याहरमाणं यत्र गतः शृणोति तत्र गत एवोत्तरयति २१ किंति, गुर्वाहूतः किमिति वक्ति २२ गुरुं त्वमिति वक्ति २३ तज्जा० गुरुणा चोदितस्तज्जातेन प्रतिहन्ति, यथा कुतोग्लानादेर्वैयावृत्त्यं न करोषीत्युक्तो वक्ति त्वमेव किं न करोषि २४ नो सु० गुरोः कथां कथयतो न सुमनाः स्यात् किंतु विमनाः २५ नो सर० गुरुम् सूत्रादिकं वदन्तमेवं वक्ति यथा न स्मरसि त्वमेतमर्थं, एषोऽर्थ एवं भवति २६ कहं छित्तत्ति, गुरौ कथां कथयति तां कथां छिनत्ति, यथाऽहं कथयामीति २७ परि० परिषदं भिनत्ति, यथासम्प्रति भिक्षादिवेलेत्यादिकथनेन २८ अणु० अनुत्थितायामेव तस्यां पर्षदि द्विस्त्रिस्तामेव कथां वक्ति २९ संथा० शय्या संस्तारकं पादेन घट्टयित्वा न मिथ्यादुःकृतं दत्ते ३० चिट्ठत्ति, गुरुशय्यासंस्तारके स्थानादि करोति ३१ उच्चति उच्चासनः ३२ समा० समासनः, तदाशातना ३३ इति दशाश्रुतस्कंधसूत्रानुसारी गाथात्रयार्थः ॥

यद्वा अरहंताणं आसायणाए इत्याद्या ३३ आशातनाः, तत्राद्याः १९ अर्हदादिविषयाः, अग्रेतनास्तु चतुर्दश सूत्रविषयास्तथा—व्याविद्धाक्षरं विपर्यस्ताक्षरम् २० व्यत्याम्रेडितं अन्यान्यासम्बद्धवर्णव्यामिश्रम् २१ हीनाक्षरं अक्षरन्यूनम् २२ अत्यक्षरं अधिकाक्षरम् २३ पदहीनं पदैर्न्यूनम् २४ विनयहीनं अकृतोचितविनयम् २५ घोषहीनं उदात्तादिघोषरहितम् २६ योगहीनं सम्यगऽकृतयोगोपचारम् २७

सुण्टु दत्तं समधिकं प्रदत्तं गुरुणा २८ दुष्टु प्रतीच्छितं कलुषितान्तरात्मना शिष्येण गृहीतम् २९ अकाले कालवेलादौ ३० कालो यो यस्यात्मीयोऽध्ययनकालस्तत्र ३१ अस्वाध्यायिके रुधिरादौ स्वाध्यायितमधीतम् ३२ स्वाध्यायिके रुधिराद्यभावे न स्वाध्यायितम् ३३ एवमेकद्व्यादिशुभाऽशुभस्थानाङ्गीकारवर्जनद्वारेण कृता महाव्रतोच्चारणा, साम्प्रतमनुक्तस्थानातिदेशतस्तां कर्त्तुमाह— ॥ ४१ ॥

**एवं निंदडविरओ, तिगरणसुद्धो तिसल्लनीसल्लो । तिविहेण पडिक्कंतो रक्खामि महव्वए पंच ॥४२॥**

एव प्रागुक्तलेश्यादिस्थानवत्त्रिदण्डविरतः मनोवाकायभेदात्, त्रिकरणशुद्धो निर्दोषः, अनयोः पदयोरयं विशेष, सावद्ययोगनिवृत्तस्त्रिदण्डविरत उच्यते, निरवद्ययोगप्रवृत्तस्तु त्रिकरणशुद्धः, अत्र चोदाहरणकोंकणसाध्वादयः ॥ तिसल्लित्यादि, शल्यानि द्रव्यतस्तोमरादीनि, भावतस्तु मायादीनि निर्गतानि शल्यानि यस्य सः, स चैकशल्यापेक्षयापि स्यादित्याह-त्रिशल्येषु विषये निःशल्यस्त्रिशल्यनिःशल्यः सन्, त्रिविधेन करणेनेति गम्यते, प्रतिक्रान्त. सर्वातिचारप्रतिनिवृत्त ॥ ४२ ॥ अथ महाव्रतोच्चारणां निगमयन्नाह—

**इच्चेअं महव्वयउच्चारणं थिरत्तं सल्लुद्धरणं धिइबलयं ववसाओ साहणट्ठो पावनिवारणं निकायणा भावविसोही पडागाहरणं निज्जुहणाराहणा गुणाणं संवरजोगो पसत्थज्झाणोवउत्तया जुत्तया य नाणे परमट्ठो उत्तमट्ठो एस खलु तित्थंकरेहिं रइरागदोसमहणेहिं देसिओ पवयणस्स सारो छज्जीवनिकायसंजमं उवएसिअं तेलोक्कसक्कअं ठाणं अब्भुवगया ॥ ४३ ॥**

इच्चेअ० इत्येतदनन्तरोक्त महाव्रतोत्कीर्त्तनं कृतमिति शेषः, तत्र च को गुणः, अथवा तत् कथंभूतमित्याह-थिरत्तंति, महा-

व्रतेष्वेव धर्मे वा स्थैर्यहेतुत्वात् स्थिरत्वं निश्चलत्वम्, भवति चासन्नमोक्षस्य महाव्रतकरणश्रवणादिभ्यः संवेगातिशयान्महाव्रतेषु धर्मे वा निष्प्रकम्पतेति । शल्योद्धरणकारणत्वाच्छल्योद्धरणम्, धृतेश्चित्तसमाधेर्बलमवष्टम्भो धृतिबलं तत्करणत्वान्महाव्रतोच्चारणमपि धृतिबलं, धृतिबलदं वा धीबलदं वा व्यवसायो दुष्करकरणाध्यवसायः । साध्यतेऽनेन साध्यमिति साधनमुपायस्तल्लक्षणोऽर्थः पदार्थः साधनार्थः, मोक्षाख्यपरमपुरुषार्थनिष्पत्त्युपाय इत्यर्थः । पापस्य निवारणं निषेधकम् । निकाचनेव निकाचना स्वव्रतप्रतिपत्तिदृढतरनिबन्धनमित्यर्थः, शुभकर्मणा वा निकाचनाहेतुत्वान्निकाचनमिदमुच्यते । भाव० भावस्यात्मपरिणामस्य विशोधिकारणत्वाद् भावविशोधिर्भावनैर्मल्यहेतुरित्यर्थः । पडा० पताकायाश्चारित्राराधनवैजयन्त्याहरणं ग्रहणं पताकाहरणम्, लोके हि मल्लयुद्धादिषु वस्त्रमाभरणं द्रव्यं वा ध्वजाग्रे बद्ध्यते, तत्र यो येन युद्धादिना गुणेन प्रकर्षवान् भवति, स रङ्गमध्ये पुरतो भूत्वा गृह्णातीति पताकां हरतीत्युच्यते । एवमत्रापि पाक्षिकादिषु महाव्रतोच्चारणतः संजातचारित्रविशुद्धिप्रकर्षः साधुः प्रवचनोक्तायाश्चारित्राराधनपताकाया हरणं करोतीति, निर्यूहना निष्काशना, कर्मशत्रूणामात्मनगरान्निर्वासनेत्यर्थः । तथा राधना अखण्डनिष्पादना, केषां गुणानां मुक्तिसाधकजीवव्यापाराणाम् । संव० नूतनकर्मागमनिरोधहेतुः संवरस्तद्रूपो योगो व्यापारः, अथवा संवरेण पञ्चाश्रवनिरोधेन योगः सम्बन्धः संवरयोग । प्रशस्तध्याने उपयुक्तता संपन्नता युक्तता च समन्वितता च, विभक्तिव्यत्ययाद् ज्ञानेन सद्बोधसम्पन्नतेत्यर्थ । महाव्रतप्रतिपत्तेः सम्यग् ज्ञानफलत्वात् । परमार्थः सद्भूतार्थः, अकृत्रिमपदार्थ इत्यर्थः ॥

कश्चित्पदार्थः परमार्थोऽपि परमाणुवत् उत्तमो न स्यात्, अत आह—उत्तमार्थः उत्कृष्टपदार्थः, मोक्षफलसाधकत्वेन महाव्रतानां सर्ववस्तुप्रधानत्वात् । एसत्ति, लिङ्गव्यत्ययादेतन्महाव्रतोच्चारणं तीर्थङ्करैरतिरागद्वेषमथनैः, तत्र रतिश्चारित्रमोहनीयोदयजन्यस्तथाविधानन्दश्चित्तविकारः । देशिनो भव्येभ्यः, प्रवेदितः, प्रवचनस्य द्वादशाङ्गस्य सारो निष्पन्दः, अतस्तेषु महानादरो विधेय इति भावः । ते च भगवन्तस्तीर्थङ्कराः षट्जीवनिकायानां संयमं रक्षामुपलक्षणान्मृषावादादिपरिहारम् चोपदिश्य भव्येभ्य, उपलक्षणात्

स्वयं कृत्वा च त्रैलोक्यसत्कृतं स्थानं सिद्धिक्षेत्रमित्यर्थः, अभ्युपगताः सम्प्राप्ता इत्यनेनापि महाव्रतानामत्यन्तोपादेयतां सूचयति । अथ महाव्रतोत्कीर्त्तनासमाप्तौ मङ्गलार्थं श्रीवीरस्तुतिमाह—

**नमो त्थु ते सिद्ध बुद्ध मुत्त निरय निस्संग माणमूरण गुणरयणसायरमणंतमप्पमेअ। नमो त्थु ते महइमहावीरवद्धमाणसामिस्स। नमो त्थु ते अरहओ नमो त्थु ते भगवओ त्ति कट्टु॥ ४४ ॥**

नमु० नमोऽस्तु तुभ्यं, हे श्रीवर्धमानस्वामिन्निति प्रक्रमः, किं विशिष्ट सिद्ध, कृतार्थ, बुद्ध केवलज्ञानज्ञातवस्तुतत्त्व, मुक्त पूर्वबद्धकर्मबन्धनैः नीरजः बध्यमानकर्मरहित, यद्वा नीरय [1]निरौत्सुक्य, निःसङ्ग [2]पुत्रादिसम्बन्धविकल, मानमूरण, सर्वगर्वोद्दलन, गुणरत्नसार, अनन्तज्ञानात्मकत्वादनन्त, मकारोऽलाक्षणिकः, अप्रमेय [3]अर्वाचीनज्ञानाऽपरिच्छेद्य, अशरीरजीवस्वरूपस्य छद्मस्थैः परिच्छेत्तुमशक्यत्वात् । महति गरीयसि प्रक्रमान्मोक्षे कृतमते इति गम्यते, महावीर, विदारयति यत्कर्म । तपसा च विराजते॥ तपोवीर्येण युक्तश्च । तस्माद्वीर इति स्मृत ॥ १ ॥

इति स्वरूपकलित हे वर्द्धमान, सिद्धादीनि वर्द्धमानातान्यामन्त्रणपदानि । कुतस्ते नमोऽस्त्वित्याह—सामिस्सत्ति विभक्तिव्यत्ययादिति कृत्वेति प्रत्येकमभिसम्बन्धाच्च स्वामीति कृत्वा, प्रभुरिति हेतोः, तथा नमोऽस्तु ते, कुत अर्हत्यष्टमहाप्रातिहार्यरूपां पूजामित्यर्हन्निति कृत्वा तथा भगवानिति कृत्वा, तद्वा महत्ति रूढिवशादतिमहान् स चासौ वीरश्चेत्यादिकर्मधारयः, तस्मै अर्हते भगवते इतिकृत्वा इतिहेतो । यतस्त्वमुक्तविशेषणोऽतस्ते [4]नमोऽस्त्विति भावः॥ तिकट्टुत्ति, त्रिकृत्वः त्रीन् वारानिति, प्रतिवाक्यं

१ निर्गतौत्सुक्य २ रहित ३ प्राकृतज्ञान ४ कथं नमोऽस्त्वस्त्याह ॥

च नमस्क्रियाभिधान स्तुतिप्रस्तावाद्दुष्टम् ॥ यथा महाव्रतोच्चारणं कर्मक्षयाय, तथा श्रुतोत्कीर्त्तनमपि कर्मक्षयाय, [2]अतस्तदाह—

एसा खलु महव्वयउच्चारणा कया ॥ इच्छामो सुत्तकित्तणं काउं ॥

एसा० एषा खलुरलङ्कारे, कृता महाव्रतोच्चारणा, साम्प्रतमिच्छामोऽभिलषामः श्रुतकीर्त्तनां आगमग्रन्थनामोच्चारणां कर्तुम्, तत् श्रुतं द्विधा, अङ्गप्रविष्टमङ्गबाह्यम् च, तत्र-पायजुगं २ जंघो ४ रू ६ । गायदुगद्धं तु ८ दो य बाहू य १० ॥ गीवा ११ सिरं च १२ पुरिसो । बारस अंगो सुअपविट्ठो ॥ १ ॥ गात्रद्विकार्धं पृष्ठोदररूपं, एवंविधश्रुतपुरुषस्याङ्गेषु प्रविष्टं व्यवस्थितं अङ्गं प्रविष्टं, तथाहि—प्रवचनपुरुषस्य पादयुगमाचारसूत्रकृते । जङ्घाद्विकं स्थानसमवायावित्यादि । यद्वा-गणहरकयमङ्गगयं । जं कय थेरेहिं बाहिरं तं तु ॥ अंगपविट्ठं नियय । अनिययसुअ बाहिरं भणियं ॥ १ ॥ श्रुतपुरुषाङ्गव्यतिरिक्तमङ्गबाह्यं द्विधा, आवश्यकं आवश्यकव्यतिरिक्तं च, तत्र तावदेष वक्तव्यत्वादावश्यकश्रुतोत्कीर्त्तनं नमस्कारपूर्वकमाह—

नमो तेसिं खमासमणाणं जेहिं इमं वाइअं छव्विहमावस्सयं भगवंतं ॥

नमो० नमस्तेभ्य' क्षमाश्रमणेभ्य. क्षमादिगुणप्रधानमहातपस्विभ्यः स्वगुरुभ्यस्तीर्थंकरगणधरादिभ्यो वेति भावः, यैरिदं वक्ष्यमाणं वाचितं अस्मभ्यं प्रदत्तम्, अथवा परिभाषितं सुत्रार्थतया विरचितमित्यर्थः । षड्विधं, अवश्यकरणादावश्यकम्, भगवत्सातिशयाभिधेयसमृद्ध्यादिगुणयुक्तम् । षड्विधत्वमाह—

तं जहा—सामाइअं १ । चउवीसत्थओ २ । वंदणयं ३ । पडिक्कमणं ४ । काउस्सग्गो ५ । पच्चक्खाणं ६ ॥

---

२ श्रुतोत्कीर्तनमाह—

सव्वेहिं पि एअम्मि छव्विहे आवस्सए भगवंते ससुत्ते सअत्थे सगंथे सनिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरिहंतेहिं भगवंतेहिं पण्णत्ता वा परूविआ वा । ते भावे सद्दहामो पत्तियामो रोएमो फासेमो पालेमो[1] अणुपालेमो ॥

तद्यथा-सामायिकं सावद्ययोगविरतिप्रधानोऽध्ययनविशेषः १ चतुर्विंशतिस्तव, ऋषभादिगुणोत्कीर्त्तनार्थोऽध्ययनविशेषः २ वन्दनकं, गुणवत्प्रतिपत्तिप्रधानोऽध्ययन० ३ प्रतिक्रमणं स्खलितनिन्दाप्रतिपादकोऽध्यय० ४ कायोत्सर्गो धर्मकार्यातिचारव्रणशोधकोऽध्यय० ५ प्रत्याख्यानं विरतिगुणकारकोऽध्ययनविशेष एव ६ सर्वस्मिन्नप्येतस्मिनन्तरोक्ते षड्विधे आवश्यके भगवति समग्रैश्वर्यादिमति, सह सूत्रेण मूलसूत्ररूपेण वर्त्तत इति ससूत्रं तस्मिन्, सहार्थेन तद्व्याख्यानरूपेण वर्त्तते इति सहार्थं तस्मिन्, सह ग्रन्थेन सूत्रार्थोभयरूपेण वर्त्तते० तस्मिन्, सह निर्युक्त्या वर्तते तस्मिन्, सह संग्रहण्या निर्युक्त्यैव बह्वर्थसङ्ग्रहणरूपया वर्त्तते यत्तत् ससङ्ग्रहणिकं तस्मिन्, ये केचन गुणा विरतिजिनगुणोत्कीर्त्तनादयो धर्माः, भावाः क्षायोपशमिकादिपदार्थाः जीवादिपदार्था वा, वाशब्दौ पूर्वोत्तरापेक्षया समुच्चये, प्रज्ञप्ता सामान्येनोद्दिष्टा प्ररूपिता विशेषेण निर्दिष्टाः, वा शब्दौ प्राग्वत् । तान् भावान् उपलक्षणाद् गुणांश्च श्रद्दध्महे सामान्येनैवमेवैतदिति श्रद्धाविषयीकुर्मः॥ पत्ति० प्रतिपद्यामहे प्रीतिकरणद्वारेण, रोए० रोचयामोऽभिलाषातिरेकेण, आसेवनाभिमुखतया रुचिविषयी कुर्म इत्यर्थः । न च प्रीतिरुची न भिन्ने, यतः क्वचिद्दध्यादौ प्रीतिसद्भावेऽपि न सर्वदा रुचिरिस्तो भेदोऽनयोः । फासे० स्पृशाम आसेवनाद्वारेण छुपामः, अणु० अनुपालयाम पुनः पुनः, करणेन ॥

---

१ 'पालेमो' इति पाठोऽधिक ॥

**ते भावे सद्दहंतेहिं पत्तिअंतेहिं रोअंतेहिं फासंतेहिं पालंतेहिं अणुपालंतेहिं । अंतोपक्खस्स जं वाइअं पढिअं परिअट्टिअं पुच्छिअं अणुपेहिअं अणुपालिअं तं दुक्खक्खयाए कम्मक्खयाए मुक्खयाए बोहिलाभाए संसारुत्तारणाए त्ति कट्टु उवसंपज्जित्ताणं विहरामि ॥**

तान् भावान् श्रद्दधानैः प्रति० । अन्तर्मध्ये पक्षस्य यत् किञ्चिद्वाचितमन्येभ्यः प्रदत्तम्, पठितं स्वयमधीतम्, परिवर्त्तितं सूत्रतो गुणितम्, पृष्टं पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः कृतः, अनुप्रेक्षितमर्थविस्मरणभयादिना चिन्तितम्, अनुपालितमेभिः प्रकारैरन्वेवमनुष्ठितम्, तद्दुःखक्षयाद्यर्थं भविष्यत्यस्माकमिति गम्यते । इति कृत्वेति हेतोरुपसम्पद्याङ्गीकृत्य. वचनव्यत्ययात् विहरामो मासकल्पादिना साधुविहारेण वर्त्तामहे ॥

**अंतोपक्खस्स जं न वाइअं न पढिअं न परिअट्टिअं न पुच्छिअं नाणुपेहिअं नाणुपालिअं संते बले संते वीरिए संते पुरिसक्कारपरिक्कमे तस्स आलोएमो पडिक्कमामो निंदामो गरिहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्ठेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥**

'जं न वाइयं' इत्यादिसूत्राणि नञ्विशेषितानि प्राग्वद्व्याख्येयानि, सति विद्यमाने बले शरीरप्राणे, वीर्ये जीवप्रभवे प्राणे, पुरुषकारः पुरुषाभिमानः, अत एव निष्पादितफलः पराक्रमः, तस्मिन् पुरुषकारपराक्रमे । विभक्तिव्यत्ययात्तदवाचितादिकमालोचयामः, (गुरवे निवेदयामः) प्रतिक्रमामः, निन्दामः, [2]स्वसमक्षं जुगुप्सामः, गर्हामो गुरुसमक्षम्, व्यतिवर्त्तयामो, वित्रोटयामो,

---

१ 'पालतेहिं' पाठोऽधिक २ स्वसाक्षिक ॥

विकुट्टयामो वाऽवाचनाद्यनुबन्धं विच्छेदयाम इत्यर्थः । विशोधयामः प्रकृतदोषमलिनमात्मानं विमलीकुर्मः । अकरणतया पुनर्न करिष्याम इत्येवमभ्युत्तिष्ठामोऽभ्युगच्छाम इति । यथार्हमपराधाद्यपेक्षया यथोचितम्, तपकर्म निर्विकृतिकादिकम्, पापच्छेदकत्वात् पापच्छित्, प्रायश्चित्तविशोधकत्वाद्वा प्रायश्चित्तं प्रतिपद्यामहे । तस्य यन्न वाचितमित्यादेरपराधस्य मिथ्यादुःकृतं स्वदोषप्रतिपत्तिगर्भपश्चात्तापानुसूचकं दद्याम[1] ॥ आवश्यकव्यतिरिक्तमपि द्विधा, कालिकमुत्कालिकं च, यदिह दिननिशाद्यन्त्यपौरुषीद्वय एवाऽस्वाध्यायिकाभावे पठ्यते तत् कालेन निर्वृत्तं कालिकम्, यत्पुनः कालवेला पञ्चविधाऽस्वाध्यायवर्ज्यं पठ्यते तदुत्कालिकम्, तत्रोत्कालिकोत्कीर्त्तनायाह—

**नमो तेसिं खमासमणाणं । जेहिं इमं वाइअं अंगबाहिरं उक्कालिअं भगवंतं तं जहा—दसवेआलिअं १ । कप्पिआकप्पिअं २ । चुल्लकप्पसुअं ३ । महाकप्पसुअं ४ । उवाइअं ५ । रायप्पसेणिअं ६ । जीवाभिगमो ७ । पन्नवणा ८ । महापन्नवणा ९ । नंदी १० । अणुओगदाराइं ११ । देविंदत्थओ १२ । तंदुलविआलिअं १३ । चंदाविज्झयं १४ । पमायप्पमायं १५ । पोरिसिमंडलं १६ । मंडलप्पवेसो १७ । गणिविज्जा १८ । विज्जाचरणविणिच्छओ १९ । झाणविभत्ती २० । मरणविभत्ती २१ । आयविसोहि २२ । संलेहणासुअं २३ । वीयरायसुअं २४ । विहारकप्पो २५ । चरणविही २६ । आउरपच्चक्खाणं २७ । महापच्चक्खाणं २८ ॥**

नमो० उत्कालेन निर्वृत्तं उत्कालिकम्, विकालेनाऽपराह्णरूपेण निर्वृतं वैकालिकं दशाध्ययनं निर्माणं च तद्वैकालिकं च मध्यम-

---

[1] प्रयच्छाम ॥

पदलोपादशवैकालिकम । कल्याऽकल्प्यप्रतिपादक कल्याऽकल्प्यम्, कल्प. स्थविरकल्पादिस्तत्प्रतिपादक श्रुत कल्पश्रुतम्, तत्पुनर्द्विभे दमेकमल्प ग्रन्थमल्पार्थं च, द्वितीय महाग्रन्थं महार्थं च । उवा० प्राकृतत्वाद्वर्णलोपे औपपातिकमुपपतनमुपपातो देवनारकजन्म सिद्धिगमनं च, तमधिकृत्य कृतमध्ययनमोप० इदं आचारांगस्योपाङ्गम् । राज्ञः प्रदेशिनाम्न प्रश्नानि, तान्यधिकृत्य कृतमध्ययन राजप्रश्नियं सूत्रकृदङ्गस्योपाङ्गमिदम् । जीवानामुपलक्षणादऽजीवाना चाभिगमो ज्ञानं यत्र स जीवाभिगमः, स्थानाङ्गस्योपाङ्गमिदम् । जीवादीना प्रज्ञापन प्रज्ञापना । महाप्रज्ञा० एते समवायाङ्गस्योपाङ्गम् । नन्दनं नन्दी , नन्दन्त्यनया भव्याङ्गिन इति वा नन्दी, पञ्चप्रकार-ज्ञानस्वरूपप्रतिपादकोऽध्ययनविशेष , अनुयोगो व्याख्यानम्, तस्य द्वाराण्युपक्रमादीनि चत्वारि मुखान्यनुयोगद्वाराणि, तत्स्वरूपप्रति-पादको ग्रन्थोऽप्यमेदोपचारादनुयोगद्वाराणीत्युच्यते । देवेन्द्राणां चमरादीनां स्तवनं भवनस्थित्यादिस्वरूपवर्णनं यत्रासौ देवेन्द्रस्तव । तन्दुलानां वर्षशतायुष्कपुरुषप्रतिदिनभोग्यानां सङ्ख्याविचारेणोपलक्षितो ग्रन्थविशेषस्तंडुलवैचारिकं । चंदा० चन्द्रो यन्त्रपुत्रिका-क्षिगोलको गृह्यते, आ मर्यादया विद्धयत इत्यावेध्यम्, कप्रत्यये चन्द्रावेध्यकं राधावेध इत्यर्थ. । तदुपमानमरणाराधनाप्रतिपादको ग्रन्थश्चन्द्रवे० । प्रमादाऽप्रमादस्वरूपभेदफलविपाकप्रतिपादकमध्ययनं प्रमादाऽप्रमादम् । पुरुष शङ्कु. शरीरं वा तस्मान्निष्पन्ना पौरुषी, इयमत्र भावना—यदा सर्वस्य वस्तुनः स्वप्रमाणा छाया जायते तदा [1]पौरुषी, इय चोत्तरायणान्ते दक्षिणायनादौ चैकं दिनं भवति, तत उर्ध्वमङ्गुलस्याष्टावेकषष्टिभागा दक्षिणायने वर्द्धन्ते, उत्तरायने च ह्रसन्तीति, एवं पौरुषी मण्डले २ अन्या २ प्रतिपाद्यते तदध्ययनं पौरुषीमण्डलम् । यत्र चन्द्रसूर्ययोर्दक्षिणोत्तरेषु मण्डलान्मण्डलप्रवेशो वर्ण्यते [2]तत्तथा । गुणगणोऽस्यास्तीति गणी आचार्यस्तस्य विद्या ज्ञानं गणि विद्या । विद्येति ज्ञानं तच्च दर्शनसहितमन्यथा ज्ञानाऽभावात् , चरणं चारित्रं, एषां फलविनिश्चय-

१ पौरुषीमान २ यत्र तदध्ययनं मण्डल प्रवेश ॥

प्रतिपादको ग्रन्थः विद्याचरणविनिश्चयः । ध्यानानामार्त्तादीनां विभजनं प्रकटनं यस्यां ग्रन्थपद्धतौ सा ध्यानविभक्तिः । मरणानामावीच्या (विभक्तिः) विचारणं यस्यां ग्रंथप० । आत्मनो जीवस्यालोचनादिप्रायश्चित्तप्रतिपत्त्यादिना विशुद्धिः प्रतिपाद्यते यत्र तदध्य० । द्रव्यतो भावतश्च संलेखना प्रतिपाद्यते यत्र तदध्ययनं संलेखनाश्रुतम्, द्रव्यसंलेखना विकृतित्यागादिः, भावतः क्रोधादित्याग । वीतरागस्वरूपं प्रतिपाद्यते यत्र तद्वीतरागश्रुतम् । विहारो वर्त्तनं तस्य कल्पो व्यवस्था स्थविरकल्पादीनामुच्यते यत्र ग्रन्थे स विहारकल्पः । चरणं-वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बम्भगुत्तीओ ९ ॥ नाणाइतिअं ३ तव १२ कोह ४ निग्गहाई चरणमेअं ॥ १ ॥ इति लक्षण० ७० भेदम्, एतत्प्रतिपादकमध्ययनं चरणविधिः । आतुरः स्वकीयव्यापारपञ्चसमितिगुप्तिषडावश्यकप्रतिलेखनादीक्रियाशक्तिविकलः (ग्लान) तस्य प्रत्याख्यानमनशनं यत्र वर्ण्यते तदातुर प्र० । महाप्रत्याख्यानम्, अत्रायं भाव· स्थविरकल्पिका विहारेणैव सलीढाः प्रान्तेऽनशनोच्चारं कुर्वन्ति, एवमेतत्सर्वम् सविस्तरं वर्ण्यते यत्र तन्महा प्र० । एवमेतान्यष्टाविंशत्यध्ययनानि यथार्थान्युक्तानि[1], उपलक्षणं चैतानि यतो नैतावन्त्येवोत्कालिकानि सन्ति इति ॥

सव्वेहिं पि एअम्मि अंगबाहिरे उक्कालिए भगवंते ससुत्ते सअत्थे सगंथे सनिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरिहंतेहिं भगवंतेहिं पन्नत्ता वा परूविआ वा ते भावे सद्दहामो पत्तिआमो रोएमो फासेमो पालेमो अणुपालेमो । ते भावे सद्दहंतेहिं पत्तिअंतेहिं रोअंतेहिं फासंतेहिं पालंतेहिं अणुपालंतेहिं अंतोपक्खस्स जं वाइअं पढिअं परिअट्टिअं पुच्छिअं अणुपेहिअं अणुपालिअं तं दुक्खक्खयाए कम्मक्खयाए मुक्खयाए बोहिलाभाए संसारुत्तारणाए त्ति कट्टु उवसंपज्जित्ता णं विहरामि । अंतोपक्खस्स जं न वाइअं न पढिअं न

१ आभिहितानी ॥

परिअट्टिअं न पुच्छिअं नाणुपेहिअं नाणुपालिअं संते बले संते वीरिए संते पुरिसक्कारपरक्कमे तस्स आलोएमो पडिक्कमामो निंदामो गरिहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्ठेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥ ५१ ॥

समुत्कीर्त्तितमुत्कालिकमथ कालिकोत्कीर्त्तनायाह—

नमो तेसिं खमासमणाणं जेहिं इमं वाइअं अंगबाहिरं कालिअं भगवंतं तं जहा—उत्तरज्झयणाइं १। दसाओ २। कप्पो ३। ववहारो ४। इसिभासिआइं ५। निसीहं ६। महानिसीहं ७। जंबुद्दीवपन्नत्ती ८। सूरपन्नत्ती ९। चंदपन्नत्ती १०। दीवसागरपन्नत्ती ११। खुड्डियाविमाणपविभत्ती १२। महल्लिआविमाणपविभत्ती १३। अंगचूलिआए १४। वग्गचूलिआए १५। विवाहचूलिआए १६। अरुणोववाए १७। वरुणोववाए १८। गरुलोववाए १९। (धरणोववाए) वेसमणोववाए २०। वेलंधरोववाए २१। देविंदोववाए २२। उट्ठाणसुइए २३। समुट्ठाणसुए २४। नागपरिआवलिआणं २५। निरयावलिआणं २६। कप्पिआणं २७। कप्पवडिंसयाणं २८। पुप्फिआणं २९। पुप्फचूलिआणं ३०। (वह्निआणं) वह्निदसाणं ३१। आसीविसभावणाणं ३२। दिट्ठिविसभावणाणं ३३। चारण-(सुमिण) भावणाणं ३४। महासुमिणभावणाणं ३५। तेअग्गिनिसग्गाणं ३६। सव्वेहिं पि एअम्मि अंगबाहिरे कालिए भगवंतेससुत्ते सअत्थे सगंथे सनिज्जुत्तिए

मसंगहणिए जे गुणा वा भावा वा अरिहंतेहिं भगवंतेहिं पन्नत्ता वा परूविआ वा ते भावे सद्दहामो पत्तिआमो रोएमो फासेमो पालेमो अणुपालेमो। ते भावे सद्दहंतेहिं पत्तिअंतेहिं रोयंतेहिं फासंतेहिं पालंतेहिं अणुपालंतेहिं अंतोपक्खस्स जं वाइअं पढिअं परिअट्टिअं पुच्छिअं अणुपेहिअं अणुपालिअं तं दुक्खक्खयाए कम्मक्खयाए मुक्खयाए बोहिलाभाए संसारुत्तारणए त्ति कट्टु उवसंपज्जित्ता णं विहरामि। अंतोपक्खस्स जं न वाइअं न पढिअं न परिअट्टिअं न पुच्छिअं नाणुपेहिअं नाणुपालिअं संते बले संते वीरिए संते पुरिसकारपरक्कमे तस्स आलोएमो पडिक्कमामो निंदामो गरिहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्ठेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥

नमो० उत्तराणि प्रधानान्यध्ययनानि रूढिवशाज्जिनयश्रुतादीन्येव षट्त्रिंशत् उत्तराध्ययनानीति। दशाध्ययनात्मको ग्रन्थो दशाः, दशाश्रुतस्कन्ध इति यः प्रतीतः। कल्पः साध्वाचारः स्थविरकल्पादिर्वा, तत्प्रतिपादकमध्ययनं कल्पः। प्रायश्चित्तगोचरव्यवहारवाची[1] ग्रन्थो व्यवहारः॥ ऋषयः प्रत्येकबुद्धा नेमिनाथतीर्थवर्त्तिनो नारदादयो विंशतिर्गृह्यन्ते, श्रीपार्श्वतीर्थवर्तिनः पञ्चदश, श्रीवीरतीर्थे दश च गृह्यन्ते, तैर्भाषितानि पञ्चचत्वारिंशदध्ययनानि ऋषिभाषितानि। निशीथो मध्यमरात्रिस्तद्वद् रहोभूतं यदध्ययनं तन्निशीथं[2] आचाराङ्गपञ्चमचूडेत्यर्थः। अस्मादेव ग्रन्थाभ्यां महत्तरं महानिशीथम्। जम्बुद्वीपादिस्वरूपप्रज्ञापनं यस्यां सा जम्बूद्वीप-

१ पतिपादकमध्ययन। २ नन्निशीथाध्ययन।

प्रज्ञप्तिः। सूरचरितप्रज्ञापन यस्यां सा सूरप्र०। केचिदेतामुत्कालिकमध्येऽधीयन्ते, तदपि युक्तम्, नन्द्यध्ययनेऽप्यस्या उत्कालिकमध्येऽधीतत्वात्। चन्द्रचारप्रतिपादको ग्रन्थश्चन्द्रप्र०। द्वीपसागराणां प्रज्ञापनं यस्यां सा द्वीप०। इहावलिकाप्रविष्टेतरविमानप्रविभजनं यस्यां ग्रन्थपद्धतौ सा विमानप्रविभक्तिः। सा चैकाल्पग्रन्थार्था क्षुल्लकाविमान प्र०। ततोऽन्या[1] महती विमान०। अङ्गस्याचारादेश्चूलिका अङ्गचूलिका यथाचारस्यानेकविधा। इह चानुक्तार्थसङ्ग्रहात्मिका चूलिका। वर्गोऽध्ययनादिसमूहो यथान्तकृतदशास्वष्टौ वर्गा इत्यादि, तस्य चूलिका वर्गचूलिका। विवाहो भगवती तस्याश्चूलिका विवा०। अरुणो नाम देवस्तदुपपातहेतुस्तत्समारप्रनिबद्धश्च ग्रन्थोऽरुणोपपातः। यदा तदध्ययनमुपयुक्तः सन् साधुः परिवर्त्तयति तदाऽरुणो देवः स्वसमयनिबद्धत्वाच्चलितासनप्रयुक्तावधिस्तत्रागत्य भक्तिभरावनतो मुक्तपुष्पवृष्टिरवपतति। ततः साधुपुरतः स्थित्वा कृताञ्जलिः शृण्वंस्तिष्ठति, समाप्ते वक्ति सुस्वाध्यायितमिदमिति वरं वृणु। स च निःस्पृहतया नेच्छति, ततोऽधिकतरसञ्जातभक्तिस्त्रिःप्रदक्षिणां कृत्वा वन्दित्वा याति। एवं वरुणोपपातगरुडोपपातश्रमणोपपातवेलन्धरोपपातदेवेंद्रोपपातेष्वपि वाच्यम्॥ उट्ठा० उत्थानश्रुतं नामाध्ययनम्। 'त पुण संघाइकज्जेसु आसुरत्ते विमाणत्थे उट्ठाणसुअमज्झयणं परिअट्टेइ। इक्कं दुन्नि तिन्नि वा वारे, ताहे से कुले वा गामे वा जाव रायहाणी वा ओहयमणसंकप्पे विलवते दुअ दुअं पहाविते, उठेइ उवस्स इति वुत्तं भवइ। समु० समुत्थानश्रुतमध्ययनम्, तं पुण समत्ते कज्जे तुट्ठे समसुहासणत्थे समुट्ठाणसुअं परिअट्टेइ। सललिअं आगच्छते समुट्ठाइ आवस्सइत्ति वुत्तं भवइ। एवं कयसंकप्पस्स परिअट्टितस्स पुव्वुट्ठिअंपि समुट्ठेइ। इतः षष्ठ्यन्तानि श्रुताभिधानानि दृश्यन्ते-तानि विभक्तिव्यत्ययात् प्रथमान्तानि व्याख्येयानि। यद्वा णमिति वाक्यालङ्कारे, ततः प्रथमान्तान्येवामूनि। नागपरिज्ञा, नागा नागकुमारास्तत्समयनिबद्धमध्ययन नागपरिज्ञा। तं जया समणे उवउत्ते परिअट्टेइ, तया अकयसंकप्पस्सवि ते नागकुमारा तत्थत्था चेव परिआणंति वंदंति नमंसंति

1 अन्यामहाग्रन्थार्था॥

संघाटकजोसु अ वरदा भवंति । निरयावलिकाः यासु नरकविचारस्तद्गामिनो नरतिर्यचश्च प्रसङ्गतो वर्ण्यन्ते ता निर० ॥ सौधर्मकल्पगतवक्तव्यतागोचरग्रन्थपद्धतयः कल्पिका उच्यन्ते । कल्पावतंसकानां विमानानां विचारस्तत्रोत्पत्तिहेतुस्तपश्च वर्ण्यते यासु ता' कल्पावतंसिकाः । पुष्फि० यासु ग्रन्थपद्धतिषु गृहवासधनत्यागेनाङ्किनः संयमभावपुष्पिताः सुखिताः, पुनः संयमभावत्यागेन दुःखाभिमुकुलनेन मुकुलिता', पुनस्तत्त्यागेनैव पुष्पिता इव प्रतिपाद्यन्ते ताः पुष्पिताः । पुष्फ० पूर्वोक्तार्थविशेषप्रतिपादिकाः पुष्पचूलिकाः । वृष्णिरन्धकनृपस्तद्वक्तव्यताविषया दशा वृष्णिदशाः उपाङ्गम् । आस्यो दंष्ट्रास्तासु विषं येषां ते आसीविषास्ते च द्विविधाः जातित' कर्मतश्च, तत्र जातितो वृश्चिकमण्डुकसर्पमानुष्यजातयः क्रमेण समधिकविषाः, वृश्चिक विषं ह्युत्कृष्टतोऽर्द्धभरतक्षेत्रप्रमाणमङ्गं व्याप्नोति, मण्डुकविष तु भरतप्रमाणमङ्गं व्याप्नोति, सर्पविषं तु जम्बूद्विपप्रमाणं, मनुष्यविषं तु मनुष्यक्षेत्रप्रमाणं वपुर्व्याप्नोति । कर्मतस्तु पञ्चेन्द्रियतिर्यञ्चो मनुष्या देवाश्चासहस्रारादिति । एते हि तपसोऽन्यतो वा गुणतो वृश्चिकादिसाध्यं कर्म (क्रियां) कुर्वन्ति, शापदानादिना पर मारयन्तीत्यर्थः[1] ॥ देवाश्चाऽपर्याप्तावस्थायां तच्छक्तिमन्तः, ते हि पूर्वं नृभवे प्राप्तामीविषलब्धयः सहस्रारान्तदेवेषूत्पन्ना अपर्याप्तावस्थायामासीविषलब्धिमन्तस्ततः परं तन्निवृत्तेः । पर्याप्ता अपि देवाः शापादिना परं घ्नन्ति, किन्तु लब्धिव्यपदेशस्तदा न प्रवर्त्तते । एव विधमासीविषस्वरूप भाव्यते यासु ग्रन्थपद्धतिषु ता आसीविषभावनाः । दृष्टौ विषं येषां ते दृष्टिविषास्तत्स्वरूपप्रतिपादिका दृष्टिविषभावना' । चारणा , अतिशयेनबहुगमनागमनलब्धिसम्पन्नाः साधुविशेषास्ते च द्विविधा विद्याचारणा' जङ्घचारणाश्च, तत्र विद्याचारणस्य यथाविधिषष्ठतपसा नित्यं तपस्यतो विद्याचारणलब्धिरासाद्यते[2], जङ्घाचारणस्य यथाविधि अष्टमतपसा नित्यं तपस्यतो जंघा० लब्धिरुत्पद्यते । तत्र विद्या विवक्षित' केऽप्यागमस्तत्प्रधानाश्चारणा विद्याचारणाः । लूतातन्तुनिर्वर्तितपुटकतन्तून् सूरकरान् वा निश्रां कृत्वा जङ्घाभ्यामाकाशे चरन्तीति जङ्घाचारणास्तेषां स्वरूपं भाव्यते यासु ताश्चार० महास्वमानि गजादीनि

१ व्यापादयन्तीत्यर्थः २ उत्पद्यते ॥

भाव्यते यासु ता महास्वप्नभावना । तेजसनिसर्गो वर्ण्यते यासु तास्तेजसनिसर्गा । एतान्यपि ३६ अध्ययनान्युपलक्षणभूतानि ज्ञेयानि, यतो वृषभतीर्थकृतः ८४ प्रकीर्णसहस्राणि, अजितादीनां पार्श्वपर्यन्तानां सङ्ख्येयानि प्रकीर्णसहस्राणि । यस्य यावन्तः शिष्यास्तस्य तावन्तीत्यर्थः । चतुर्दश सहस्राणि श्रीवीरस्यासन्[2] ॥ उक्तं कालिकं, तदभिधानाच्चावश्यकव्यतिरिक्तं, तद्भणनाच्चाङ्गबाह्यश्रुतमुक्तम् । साम्प्रतमङ्गप्रविष्टश्रुतोत्कीर्तनायाह—

नमो तेसिं खमासमणाणं जेहिं इमं वाइअं दुवालसंगं गणिपिडगं भगवंतं तं जहा—आयारो १ । सूअगडो २ । ठाणं ३ । समवाओ ४ । विवाहपन्नत्ती ५ । नायाधम्मकहाओ ६ । उवासगदसाओ ७ । अंतगडदसाओ ८ । अणुत्तरोववाइअदसाओ ९ । पण्हावागरणं १० । विवागसुअं ११ । दिट्ठिवाओ १२ । सव्वेहिं पि एअंमि दुवालसंगे गणिपिडगे भगवंते ससुत्ते सअत्थे सगंथे सनिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरिहंतेहिं भगवंतेहिं पन्नत्ता वा परूविआ वा, ते भावे सद्दहामो पत्तियामो रोएमो फासेमो पालेमो अणुपालेमो, ते भावे सद्दहंतेहिं पत्तिअंतेहिं रोयंतेहिं फासंतेहिं पालंतेहिं अणुपालंतेहिं अंतोपक्खस्स जं वाइअं पढिअं परिअट्टिअं पुच्छिअं अणुपेहिअं अणुपालिअं तं दुक्खक्खयाए कम्मक्खयाए मुक्खयाए बोहिलाभाए संसारुत्तारणाए त्ति कट्टु उवसंपज्जित्ताणं विहरामि । अंतोपक्खस्स जं न वाइअं न पढिअं न परिअट्टिअं न

पुच्छिअं नाणुपेहिअं नाणुपालिअं संते बले संते वीरिए संते पुरिसक्कारपरक्कमे तस्स आलोएमो पडिक्कमामो निंदामो गरिहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्टेमो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥

नमो० गणिनः आचार्यस्य पिटकं द्वादशाङ्गार्थसारं प्रधानभाजनम्, आचरणमाचारः, आचार्यत इति वाऽचारः शिष्टाचरितो ज्ञानाद्यासेवनविधिरित्यर्थः । तत्प्रतिपादको ग्रन्थोऽप्याचार एवोच्यते । "सूत्र सूचायां" सूचनात् सूत्रम्, सूत्रेण कृतं सूत्रकृतम्, स्वपरसमयादिसूचकं यदित्यर्थः । तिष्ठन्त्यासते वसन्ति यथावदभिधेयतयैकत्वादिविशेषिताः आत्मादयः पदार्था यत्र तत्स्थानम्, अथवा स्थानशब्देनेहैकादिकः सङ्ख्याभेदोऽभिधीयते, ततश्चात्माद्यर्थगतानामेकादिदशान्तानां स्थानानामभिधायकत्वेन स्थानमाचाराभिधायकत्वादाचारवत् । समिति सम्यग्, अव इत्यधिकः, अयः जीवादिपरिच्छेदः समवायस्तद्धेतुश्च ग्रन्थोऽपि समवायः । विशिष्टाः वाहा अर्थप्रवाहास्तत्त्वार्थपद्धतय इत्यर्थः, तेषां प्रज्ञप्तिर्व्याख्या यस्यां सा विवाहप्रज्ञप्तिः, पूज्यत्वेन नामान्तरतो भगवतीति । ज्ञातान्युदाहरणानि तत्प्रधाना धर्मकथा. ज्ञाताध० ॥ उपासका श्रावकास्तद्गतक्रियाकलापप्रतिबद्धा दशा, दशाध्ययनोपलक्षिता उपास० । अन्तो विनाशः, स च कर्मणस्तत्फलभूतभवस्य वा कृतो यैस्तेऽन्तकृता जिनाः तेषां दशा आद्यवर्गे दशाध्ययनानि, इति तत्सङ्ख्ययोपलक्षिता अंतकृतदशाः । अनुत्तरः सर्वोत्तमः उपपातो जन्म येषां तेऽनुत्तरोपपातिका सर्वार्थसिद्धादिविमानपञ्चकोपपातिन स्तद्वक्तव्यताप्रतिबद्धा दशा दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशाः । प्रश्नाश्च पृच्छाः व्याकरणानि च निर्वचनानि समाहारत्वात्प्रश्नव्याकरणम् । तत्प्रतिपादको ग्रन्थोऽपि प्रश्नाव्या० । विपचनं विपाकः शुभाऽशुभकर्मपरिणाम इत्यर्थस्तत्प्रतिपादकं श्रुतं विपाकतश्रुतम् । दृष्टयो दर्शनानि तासां वादः पातो वा यत्रासौ दृष्टिवादः, दृष्टिपातो वा, सर्वदर्शनदृष्टयो यत्राख्यायन्ते समवतरन्ति वेति भावः ॥

इत्युत्कीर्त्तितं सामान्यतोऽङ्गप्रविष्टं श्रुतम्, साम्प्रतं श्रुतदातृपालकेभ्यो नमस्कार आत्मीयप्रमादविषये मिथ्यादुष्कृतं चाह—

**नमो तेसिं खमासमणाणं जेहिं इमं वाइअं दुवालसंगं गणिपिडगं भगवंतं [1]तं जहा—सम्मं काएणं फासंति पालंति पूरंति तीरंति किट्टंति सम्मं आणाए आराहंति अहं च नाराहेमि तस्स मिच्छामि दुक्कडं ॥**

नमो॰ नमोऽस्तु तेभ्य यैरिद प्रागुक्तं वाचितं प्रदत्त परिभाषितं वा सूत्रार्थतः प्रणीतम्, द्वादशाङ्गम्, कि विशिष्टं गुणानां साधूनां वा गणोऽस्यास्तीति गणी आचार्यस्तस्य पिटकमिव रत्नादिकरण्डक इव पिटक गणिपिटकं सर्वार्थसारकोशभूतमित्यर्थ.। भगवंतंति, भग समग्रैश्वर्यादिरूपः, उक्तंच—ऐश्वर्यस्य समग्रस्य। रूपस्य यशसः श्रियः॥ धर्मस्याथ प्रयत्नस्य । षणां भग इतीङ्गना ॥ १ ॥ तत्रेह समग्रैश्वर्य सातिशयार्थविभूतिः, यदवाचि—सव्वनईणं जा हुज्ज वालुआ। सव्वउदहि जं सलिलं ॥ पत्तोवि अणंतगुणो । अत्थो एगस्स सुत्तस्स ॥ १ ॥ रूपं च निर्दोषत्वहेतुयुक्तत्वादिगुणगणसम्पाद्यम्, यशश्च विश्वव्यापिनी कीर्त्तिः, श्रीश्च कमनीयता आनन्ददायितेत्यर्थः। धर्मश्चाभिधेयत्वेन सर्वोपाधिविशेषविशुद्धोऽहिंसादिकः, प्रयत्नश्च कर्त्तव्यतया सर्वप्रमादवर्जनरूप उद्यमः। एतादृशो भगो विद्यते यस्य तद् भगवत्। ये च इदं सम्यगवैपरीत्येन कायप्रवृत्त्या न मनोमात्रेण, स्पृशन्ति ग्रहणकाले विधिना गृह्णन्ति, पालयन्ति पुनः पुनरभ्यासतो रक्षयन्ति, पूरयन्ति मात्राबिन्द्वक्षरादेरध्येतृदोषादपरिपूर्णं परिपूर्णं कुर्वन्ति, तीरयन्ति अविस्मृतं जन्मपारं नयन्ति, कीर्त्तयन्ति स्वनामभिः स्वाध्यायकरणतो वा संशब्दयन्त्युच्चारयन्ति, सम्यगाज्ञया आराधयन्ति सम्यग्

---

१ तं जहा पाठोऽधिक ।

गथावदाज्ञया तदुक्तार्थरूपया गुरुनियोगात्मिकया वा आराधयन्ति, तदुक्तक्रियाकरणतः फलदं कुर्वन्तीत्यर्थः, तेभ्यो नम इति प्रक्रमः॥

यश्चाहं नाराधयामि, प्रमादतो नानुपालयामि, तस्सत्ति षष्ठीसप्तम्योरभेदात् तस्मिन्ननाराधना विषये मिथ्या मे दुष्कृतम्, स्वदुश्चरितानुतापसूचकं स्वदुःखप्रतिपत्तिसूचकं वा प्रतिक्रमणमिति परिभाषितं पूर्वसूरिभिः कथितं पाक्षिकसूत्रान्तरं वाक्य प्रतीच्छामीत्यर्थः। श्रुतदेवतास्तुतिमाह—

सुअदेवया भगवई। नाणावरणीयकम्मसंघायं॥ तेसिं खवेउ सययं। जेसिं सुअसायरे भत्ती॥ १॥

॥ इति श्रीपाक्षिकसूत्रं समाप्तम्॥

सुअ० श्रुताधिष्ठात्री देवता श्रुतदेवता, भवति च श्रुताधिष्ठात्री देवता, यदुक्तं कल्पभाष्ये-सव्वं च लक्खणोवेयं समाहिठंति देवया॥ सुत्तं च लक्खणोवेयं। जेणं सव्वन्नुभासियं॥ १॥ भगवती पूज्या, ज्ञाना० ननु कथं श्रुताधिष्ठातृदेवताया व्यंतरादिप्रकारायाः कर्मक्षपणे सामर्थ्यम्, उच्यते, तद्गोचरशुभध्यानस्यापि स्मर्तुः कर्मक्षयहेतुत्वेनाभिहितत्वात्॥

॥ इति श्रीपाक्षिकसूत्रावचूरिः समाप्ता॥

## ॥ श्रीक्षामणकसूत्रम् ॥

(अवचूरिसमलङ्कृतम्)

यथा राजानं मङ्गलपाठका प्रतिक्रान्ते माङ्गल्यकार्ये बहुमन्यन्ते यदुत अखण्डितबलस्य ते गतः कालोन्योप्येवमेवोपस्थितः, एवं पाक्षिकं विनयोपचारं द्वितीयक्षामणकसूत्रेण तथास्थिता एव साधव आचार्यस्य कुर्वन्ति तच्चेदं—

इच्छामि खमासमणो पियं च मे जं भे। हट्ठाणं तुट्ठाणं। अप्पायंकाणं। अभग्गजोगाणं। सुसीलाणं। सुव्वयाणं सायरियउवज्झायाणं। नाणेणं। दंसणेणं। चरित्तेणं। तवसा अप्पाणं भावेमाणाणं। बहुसुभेण भे दिवसो पोसहो पक्खो वइक्कंतो। अन्नो य भे कल्लाणेणं पज्जुवट्ठिओ। सिरसा मणसा मत्थएण वंदामि ॥

इच्छामि अभिलषामि [illegible] वस्तु। कुतोऽपि कारणादप्रियमपि किञ्चिदिष्यत इत्यत आह प्रियमभिमतम्, च समु[illegible]—[illegible] भगवतां, हृष्टानां रोगरहितानां तुष्टानां तोषवताम्, अथवेदं हर्षातिरेकप्रतिपादनार्थमेकार्थिकपद[illegible] सर्वथा रोगाभावासम्भवात् सत्योगातिरोगवर्जितानाम्, सामान्येन वा नीरोगाणां स्तोकरोगाणां वा [illegible] भावयताम्, बहुशुभेनात्यर्थश्रेयसा ईषदूनशुभेन वा सर्वथा शुभाभावात्। मे इत्या[illegible] पोषधः पूर्वरूपः तथा पक्षोऽर्द्धमासरूपो व्यतिक्रान्तोऽतिलङ्घितः। अन्यश्च पक्ष इति वर्तते। [illegible] पर्युपस्थितः प्रतिक्रान्त इति। एवं पुण्यमाणव इव मङ्गलवचनमभिधाय प्रणाममाह—

शिरसा मनसा वचोऽध्यहार्यः । मत्थएण वंदामि नमस्कारवचनमव्युत्पन्नं समयप्रसिद्धमतः शिरसेत्यभिधायापि यन्मस्तकेनेत्युक्तं तददुष्टम्, यथा गां बलीवर्दानामेव गोस्वामीति, गोस्वामिन् शब्दस्य स्वामिपर्यायतया लोके रूढित्वादिति । आचार्य आह—

**तुब्भेहिं समं ति ।**

युष्माभिः सार्धं सर्वमेवमेतत्सम्पन्नमित्यर्थः । अथ चैत्यसाधुवन्दापनं च निवेदयितुकामा भणन्ति—

**इच्छामि खमासमणो । पुव्विं चेइयाइं वंदित्ता । नमंसित्ता । तुब्भण्हं पायमूले विहरमाणेणं । जे केइ बहुदेवसिया साहुणो दिट्ठा समाणा वा वसमाणा वा गामाणुगामं दूइज्जमाणा वा । रायणिया(सं)पुच्छंति । ओमरायणिया वंदंति । अज्जया वंदंति । अज्जिआओ वंदंति । सावया वंदंति । सावियाओ वंदंति । अहंपि निस्सल्लो निक्कसाओ त्ति कट्टु सिरसा । मणसा मत्थएण वंदामि ॥ अहमवि वंदावेमि चेइयाइं ॥**

इच्छामि० अभिलषामि चैत्यसाधुवन्दापनं भवतां निवेदयितुमिति शेषः । पुव्विं० पूर्वकालेविहारकालात् चे० जिनप्रतिमा. वन्दित्वा स्तुतिभिः, नमं० प्रणामत. सङ्घसत्कचैत्यवन्दना ह्येतदहं करोमीति प्रणिधानयोगात्, क वन्दित्वेत्याह—युष्माकं चरणसंनिधौ वि० सञ्चरता मया ये केचन बहु० बहुदिवसपर्यायाः जङ्घाबलक्षयात् वृद्धवासितया आश्रितक्षेत्राद्बहिर्वर्त्तिन. । व० विहारवन्तो· विहारश्च तेषां ऋतुबद्धे मासकल्पेन वर्षाकाले तु चतुर्मासिकल्पेनेत्यत एवाह अनुग्रामश्च तदनन्तर इति तद्दूद्रवन्तो गच्छन्त., अथवा ग्रामादावेकरात्रिकं वसन्त आहिण्डका इत्यर्थः, वाशब्दाः समुच्चये इह स्थाने तेषु मध्ये इति वाक्यशेषो ज्ञेय. । रा० रात्निका भावरत्नव्यवहारिणः बृहत्पर्याया आचार्या इत्यर्थ. । पु० मां प्रश्नयन्ति मया वन्दिता सन्तो भवतां शरीरकुशलादिवार्तामिति गम्यम ।

## आयरियसंतियं त्ति ।

पूर्वाचार्य सत्कमेतदिति किं ममात्रेति अहङ्कार वर्जनार्थं चैतत् । अथ यच्छिक्षां ग्राहितास्तदनुग्रहं बहुमन्यमाना आहुः—

**इच्छामि खमासमणो । अहमपुव्वाइं । कयाइं च मे । किइकम्माइं । आयारमन्तरे । विणयमन्तरे । सेहिओ । सेहाविओ । संगहिओ । उवगहिओ । सारिओ । वारिओ । चोइओ । पडिचोइओ । चियत्ता मे पडिचोयणा । उवट्ठिओऽहं तुब्भण्हं तवतेयसिरीए । इमाओ चाउरंतसंसारकंताराओ साहट्टु नित्थरिस्सामि त्ति कट्टु । सिरसा मणसा मत्थएण वंदामि ॥**

इच्छामि अहमपूर्वाण्यनागतकालीनानि, कृतिकर्माणीतियोगः । कर्तुमिति शेषः । तथा कृतानि पूर्वकाले मया कृतिकर्माणि वैयावृत्यविशेषा भवतामिति गम्यते, तेषु च आचारान्तरे ज्ञानाद्याचारविषये आचारव्यवधाने वा सति ज्ञानादिक्रियाया अकरणे सति इति भावः । विनयान्तरे आसनदानादिविनयविषये विनयविच्छेदे वा तदकरणे इत्यर्थः । स० शिक्षितः स्वयमेव गुरुभिः शिक्षा ग्राहित इत्यर्थः । सेधितो वा निष्पादितो वा आचारविशेषविनयविशेषेषु कुशलीकृत इत्यर्थः । स० शिक्षापितः सेधापितो वा उपाध्यायादिप्रयोजनत. । सं० सङ्गृहीतः शिष्यत्वेनाश्रितः उव० उपगृहीतः ज्ञानाभिर्वस्त्रादिभिश्चोपष्टम्भितः । सा० सारितो हिते प्रवर्त्तितः कृत्यं सारितः वा अहितान्निवारितः । चो० संयमयोगेषु स्खलितः सन्नयुक्तमेतद्भवादृशां विधातुमित्यादिवचनेन प्रेरितः । प० तथैव पुन पुनः प्रेरित एव । चि० चियत्ता नत्वहङ्कारादप्रीतेति मे मम प्रतिप्रेरणा भवद्भिः क्रियमाणेति, उपलक्षणं चैतच्छिक्षादेरिति, ततश्च उव० उपस्थितोऽहमस्मि प्रतिप्रेरितार्थसम्पादनविषये कृतोद्यम इत्यर्थः । तु० युष्माकं तपस्तेजःश्रिया भवदीयया

। इति श्रमणसूत्र,-पाक्षिकसूत्र-क्षामणकसूत्राणि

अवचूरिसमलंकृतानि

समाप्तानि ।